ब्योल लारूब्योल व्रते भोज्यानि ॥ खसखास अन्नसमं व्रते निषिद्धम् ॥ "तकं हिंग्वथ लवणं दन्तधावनमैथुनम् । द्यन्नं (द्वयोरन्नयोः समाहारः) (मिलितमन्नद्वयं) मधु परान्नं च वर्जयेत्संक्रमे दिने,, ॥ विपणिपाचितं द्रव्यं वर्जयेद्धव्यकव्ययोः ॥ धान्यचल करेलः गनहार पिंगह त्रुम्ब किवो श्रलिश पिचिकिसुर पुदन क्रुथ शोल प्यचिलडुर गिलास तुल नित्ये नैमित्तिके दैवे पित्र्ये च भक्षयेत् ॥ उन्मत्तं (दतुरपोष) अर्कपुष्पं (गुलिआफताब) विष्णोर्वर्ज्यं सदा बुधैः ॥ देवकीसुतं रक्तपुष्पैः बिल्वीदलैः रक्तचन्दनैर्नार्चयेत् । दतुरपोष बिल्वपत्र अन्यानि च शुक्लपुष्पाणि शिवपूजायां विहितानि। देव्याः सूर्यस्य गणेशस्य च रक्तपुष्पाणि ॥ भूगतं वर्जयेत्पुष्पम्, छिन्ने भिन्ने पुष्पे दोषः, बिल्वस्य पद्मस्य च नैष दोषः ॥ मुद्गाः समग्रा, माषाश्च दलिता अपि वै तथा। तथाचोपलशाकं चेत्यादि विहितम् ॥ अन्यैश्च क्षीरविकृतैः कविकादिभिरप्युत । (क्रुह चामन दध्यादि) तथा दधिविकाराश्च । एते सर्वे व्रतादौ शस्ताः ॥ ११. श्राद्धे ब्राह्मणपरीक्षा-दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥ सहस्राणि सहस्राणामनृचां यत्र भुञ्जते । एकस्तन्मात्रविद्विप्रः सर्वानर्हति धर्मतः ॥ ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च । नहि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥ दूरात्परीक्षा-पितृपितामहाद्यभिजनाचारादिपरीक्षा ॥ न



ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् । पित्र्ये कर्मणि संप्राप्ते

परीक्षेत प्रयत्नतः ॥ श्रुतवृत्ताद्यैः परीक्षेतेत्यर्थः ॥ १२. पंक्तिपावनाः–अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च (वेदार्थनिर्वचनेषु) । श्रोत्रियान्वयजाश्चैव विज्ञेयाः पंक्तिपावनाः ॥ गृहस्थानां सहस्रेण वानप्रस्थशतेन च । ब्रह्मचारिसहस्रेण योगी त्वेको विशिष्यते ॥ १३. अनुकल्पः–मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं (जामाता) बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ शिष्यानपि गुणवतो भोजयेत् ॥ १४. मित्रं–रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथेत्यादयः, चिकित्सका देवलका इत्यादयो श्राद्धभोजने वर्ज्याः ॥ १५. ब्राह्मणनिमंत्रणविधिः– वस्त्रशौचाद्यर्थं दन्तकाष्ठादि च दत्त्वा भोजनीयब्राह्मणगृहं गत्वा निमंत्रयेत् ॥ स्वयं शिष्योऽथवा सुतः ब्राह्मणान्निमंत्रयेदिति यम आह ॥ विधिवत्केतनं प्रतिगृह्य शक्तः सन्नापक्रामेत् । केतनं (निमंत्रणं) कारयित्वा तु योतिपातयते द्विजः । ब्रह्महत्यामवाप्नोति श्वयोनौ चैव जायते ॥ पूर्वं निमंत्रितोन्येन कुर्यादन्यप्रतिग्रहम् । भुक्ताहारोऽथवा भुंक्ते सुकृतं तस्य नश्यति ॥ श्राद्धकालातिपातकरणे निमंत्रितस्य दोषमाह–आमंत्रिताश्चिरं नैव कुर्युर्विप्राः कदाचन । देवतानां पितॄणां च दातुरन्नस्य चैवहि । इति ॥ १६. श्राद्धभुक् दन्तधावनं कुर्यात् । श्राद्धकर्ता तु न ॥ यदा महालयश्राद्धं केवलनित्यबुद्धया करोति तदा पुरोरवार्द्रवाविति । यदा केवलकाम्यबुद्धया तदा ध्वनिलोचनावेव । यथोभयबुद्धया तदापि ध्वनिलोचनावेव ॥ शुक्लाः सुमनसः श्रेष्ठा-

स्तथा पद्मोत्पलानि च । जलजव्यतिरिक्तरक्तपुष्पाणि च श्राद्धे ग्राह्याणि ॥ ऊर्जंवहन्तीरित्यनेन सोदकेनाऽप्रदक्षिणं पिण्डानां विकिरणम् इति केचित् ॥ श्राद्धे आवश्यकोपवासे प्राप्ते पितृसेवितमाघ्रायोपवासयेत् ॥ तथा च श्रुतिः—अवघ्रेयमेव तन्नैव । प्राशितं नैव । प्राशितं नैव ॥ १७. यदा मातापितृभ्रात्राद्यनेकसांवत्सरिकाणां युगपत्सन्निपातस्तदा पूर्वं पितुः श्राद्धं ततो मातुः ततश्चान्येषामिति प्रधानोपसर्जनतरतमभावेन सांवत्सरिकं कुर्यात् ॥ अत्र तु भृगूक्तग्रन्थांशस्यायमाशयः । श्राद्धकालातिक्रमप्रसङ्गभयात् एकेनैव पाकेन (तस्यैवावृत्तिकरणेन) प्रधानोपसर्जनतारतम्येन च सर्वेषां तत्तत्कर्मावृत्त्या एकमेव श्राद्धम् । श्राद्धकालानपेक्षितत्वे तु पृथक् २ पाकादि । पृथक् २ श्राद्धकरणं चेति ॥ १. संस्कारतत्त्वात्– स्वयं ब्रह्मचारी भवेत् । योषित्प्रसङ्गिनं विप्रं श्राद्धार्थे न निमंत्रयेत् ॥ श्राद्धे जन्मदिने चैव विवाहेऽजीर्णसंभवे । व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ॥ अलाभे दन्तकाष्ठस्य प्रतिषिद्धदिने तथा । अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥ प्रातःस्नाने पितृश्राद्धे षष्ठ्यां च द्वादशीषु च । सुरास्नानसमं तैलं पितृंश्च नरकं नयेत् ॥ नेष्टकारचिते पितॄन् सन्तर्पयेदिति ब्रह्मपुराणम् ॥ लिङ्गपुराणे–सालिग्रामशिलाग्रे तु यच्छ्राद्धं क्रियते नृभिः । तस्य ब्रह्मान्तिकं स्थानं तृप्ताश्च पितरो दिवि ॥ केचित् पुरूरवसे (पुरो०) आर्द्रवासंसे इति । केचित् पुरोरवाय आर्द्रवाय । आर्द्रवासवे इतिच पठन्ति ॥ पित्रादीनां नामाह्वाने तु आश्व-

लायनसूत्रम्–नामान्यविद्वांसस्तत्पिता पितामह प्रपितामहा इति । अत्र तत्पदेन कर्तृनाम ज्ञेयम् । देवदत्तपितः इत्यादि । गोत्रसम्बन्धोपि पित्रादिना विधेयः इति ॥ विश्वेभ्यो देवेभ्यः क्रतुदक्षाभ्यामित्यादिसम्बन्धस्तु उर्वश्यप्सरस इत्यादिवत् ज्ञेयः ॥ अपः प्रदायेति यदुक्तं श्राद्धे तज्जलदानं श्राद्धीयब्राह्मणपाणिप्रक्षालनार्थम् ॥ घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः । धूपार्थे गुग्गुलं दद्याद्घृतयुक्तं मधुप्लुतम् ॥ पिण्डेष्वहतवस्त्रदानेनायुरैश्वर्यरूपाणि लभते दाता ॥ पिण्डेषु यज्ञोपवीतार्पणेन ब्रह्मदानफलम् ॥ पात्राणि–काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा । दत्तमक्षयतां याति खड्गेनार्घकृतेन च । औदुम्बरेण–ताम्रेण । खड्गेन–गण्डकशिरोस्थिनिर्मितेन । आर्घकृतेन–वैवर्णिकक्कृतेन ॥ कल्पतरौ । राजतं राजताक्तं वा पितॄणां पात्रमुच्यते । रजतस्य तथा दानं दर्शनं नाम शस्यते ॥ अथार्घ्यपिण्डभोज्येषु पितॄणां राजतं मतम् ॥ अमंगल्यं तु रजतं दैवकार्येषु वर्जयेत्–इति दैवे कर्मणि अर्घ्ये तन्निषिद्धम् ॥ अग्नौ करवाणि–इति जुहुयाद्यञ्जनक्षारवर्जमन्नं ततोऽनले । अत्र मंत्रान्ते स्वाहेति न वक्तव्यं । पृथिवी ते पात्रमिति पात्राभिमंत्रणम् । इदंविष्णुरिति द्विजाङ्गुष्ठनिवेशनम् । पात्रग्रहणं 'दैवेऽनुत्तानपाणिभ्यामुत्तानाभ्यां च पैतृके, कर्तव्यम् ॥ गोभिलः–त्रिःफलीकृतांस्तण्डुलान् त्रिर्देवेभ्यः, द्विर्मनुष्येभ्यः, सकृत् पितृभ्यः प्रक्षालयेत् ॥ पात्रं विना हस्तस्थाक्षादिकं न परिवेषयेत् । हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च । दातारं

नोपतिष्ठन्ते भोक्ता भुंक्ते तु किल्बिषम् ॥ तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा । प्रदद्यान्न तु हस्तेन नायसेन कदाचनेति वसिष्ठः ॥ विष्णुः— भुक्तवत्सु च विप्रेषु भूमिं सकुशामभ्युक्ष्यान्नविकिरणमुच्छिष्टाग्रतः । तथाच मात्स्ये—सार्ववर्णिक (सर्वप्रकारकं) मन्नाद्यं सन्नीया— (मिश्रयित्वा) प्लाव्य वारिणा । समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि—अग्निदग्धा इति ॥ तृणमादाय पिण्डं तु कृत्वा बिल्वफलोपमम् । दद्यात्पितामहादिभ्यो दर्भमूलाद्यथाक्रमम् ॥ ज्ञात्यादिषु सर्वेषु भुक्तवत्सु पश्चात्सदारस्य कर्तुः श्राद्धशेषाहारः ॥ तदकरणे श्राद्धनिष्फलता ॥ श्राद्धतिथौ मैथुनमृतुकालीनमपि त्याज्यम्—शंखलिखितौ 'ऋतुस्नातां तदहोरात्रं परिहरेत् ॥ मत्स्यपुराणे—रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता । दानशक्तिः सविभवा रूपमारोग्यसम्पदः । श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ॥ आमान्नेन क्वचित् श्राद्धमुक्तम् । क्वचित् हेमश्राद्धमिति । आमान्नमूल्याच्चतुर्गुणेन हेम्ना श्राद्धं कुर्यादित्यर्थः । तदाह मरीचिः— 'आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् । आमाच्चतुर्गुणेनैव हिरण्येन सुरोचिषा, इति ॥ तिलके— ऊर्ध्वपुण्ड्रेण देवानामधोपुण्ड्रेण पैतृके । कर्णे कंठे ललाटे च त्रिस्थाने च त्रिदैवतम् ॥ मध्याह्नस्यैको मुहूर्तः अपराह्णस्य त्रयः इति मुहूर्तचतुष्टयं पञ्चकं वा अत्र स्वधाभवनमिष्यते ॥ रौहिणं तु दिवसस्य नवमसुहूर्तः—इत्थमत्र काश्मीरिकाचारः— श्राद्धतिथौ यद्दिनमानं चषकैः सह सम्पद्येत । तस्य दिनमानस्य पंच

भागान्कुर्यात्। तत्र यदि श्राद्धतिथेः परिमाणं दिनमानस्य त्रिभ्यो भागेभ्यः किंचिन्मात्रमप्यधिकं भवेत् तदा श्राद्धं स्वतिथावेव कर्तव्यम् । यदि च त्रिभ्यो भागेभ्यः किंचिन्मात्रमपि न्यूनं स्यात्तदा पूर्वदिन एव श्राद्धं विधेयम्। यदि समं स्यात् तदापि स्वतिथावेव श्राद्धविधिः ।। मध्याह्नालोचना–श्राद्धतिथेस्तत्पूर्वतिथेश्च घटिकादीनामैक्यं कृत्वा यदि श्राद्धदिनपरिमाणादधिका घटिकाः स्युस्तदा स्वदिने एव श्राद्धादि। यदि दिनमानान्न्यूनाः स्युस्तदा पूर्वदिन एव। यदि साम्यं तदापि पूर्वदिने एव ॥ १. पार्वणैकोद्दिष्टयोरेकत्र कार्यत्वे पार्वणं कृत्वा एकोद्दिष्टं कुर्यात्। अत्र जाबालिः–यद्येकत्र भवेतां चेदेकोद्दिष्टं च पार्वणम् । पार्वणं त्वभिनिर्वर्त्य ह्येकोद्दिष्टं समाचरेत् ॥ १. (वृद्धिश्राद्धे) कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही । युग्मांस्तु प्राङ्मुखान्विप्रान्भोजयेन्मनुजेश्वर ॥ मातृश्राद्धं तु पूर्वं स्यात्पितृणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ दधिबदराक्षतमिश्राः पिण्डाः ॥ प्रागग्रेषु दर्भेष्वाद्यमामंत्र्य च पूर्ववत्। अपः क्षिपेन्मूलदेशेऽवनेनिजति निस्तिलाः ॥ द्वितीये च तृतीये च मध्यदेशाग्रदेशयोः। मातामहप्रभृतींस्तु, ह्येतेषामेव वामतः। पिण्डान्दद्यात् प्रयत्नेनेति ॥ संयोज्याक्षतकर्कन्धु (बदर) दधिभिः प्राङ्मुखस्ततः। अवनेनिजवत्पिण्डान्दत्वा बिल्वप्रमाणकान् ॥ तस्योत्तरदानेन पिण्डानामुत्तरोत्तरः।

भवेद्यश्च करणाद्धरः श्राद्धकर्मसु ॥ (अपने दक्षिणकी तरफ कुशाके मूलभागमें पहिले मातृपिण्ड, उसके उपरकी तरफ कुशाके मध्यभागमें दूसरा पितामहीपिण्ड, फिर उसके उपरकी तरफ कुशाके अग्रभागमें प्रपितामहीका पिण्ड रखना चाहिए। फिर ऐसेही उनपिण्डोंके उत्तरकी तरफ पित्रादि पिण्ड, फिर उनके उत्तरकी तरफ मातामहादिपिण्ड उपर २ रखने चाहिए) ॥ तस्मात्सर्वेषु श्राद्धेषु वृद्धिमत्स्वितरेषु च। मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ॥ दक्षिणाप्रवणे देशे दक्षिणाभिमुखस्य च । दक्षिणाग्रेषु दर्भेषु एषोन्यत्र (वृद्धिश्राद्धान्यश्राद्धेषु) विधिः स्मृतः ॥ वृद्धिनिमित्तकं श्राद्धं प्रातः कालिकम् ॥ नान्दीमुखश्राद्धे न वारतिथिदूषणम् ॥ नान्दीमुखे सत्यो वसुश्च विश्वेदेवाः ॥ १. महालयश्राद्धम्- अत्र शक्तेन महालये प्रतिपदमारभ्य दर्शान्तं तिथिवृद्धौ षोडश श्राद्धानि कर्तव्यानि । वृद्धिक्षयाभावे पञ्चदशैव । तिथिक्षये च चतुर्दशैव ॥ अशक्तेन तु पंचम्यादिषु, षष्ठ्यादिषु, अष्टम्यादिषु, दशम्यादिषु एकादश्यादिषु वा दर्शान्ततिथिषु महालयाः कार्याः॥ हेमाद्रौतु-अश्वयुक् कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने। त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा इति ॥ अत्रापि अशक्तेनानिषिद्धे कस्मिंश्चिदेकस्मिन्दिने सकृन्महालयः कर्तव्यः ॥ सकृन्महालये तु प्रतिपत् मृततिथौ वा महालयश्राद्धम् ॥ सकृन्महालये तु प्रतिपद् षष्ठी एकादशी चतुर्दशी शुक्रवारो जन्मनक्षत्रं जन्मनक्षत्राद् शमं नक्षत्रं एकानविंशं च रोहिणी मघा रेवतीचेतिवर्ज्यानि।

क्वचित् त्रयोदशी सप्तमी रविवारो भौमवारोऽपि वर्ज्य उक्तः ॥ मृततिथौ महालयकरणे नन्दादिनिषेधो नास्ति । तथाचोक्तम्–अशक्तः पितृपक्षे तु करोत्येकदिने यतः । निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि ॥ संन्यासिनां महालयस्त्वपराह्णव्यापिन्यां द्वादश्यामेव सपिण्डको महालयः कार्यो नान्यतिथौ ॥ चतुर्दश्यां मृतस्य महालयश्चतुर्दश्यां न कार्यः 'श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां प्रकीर्तितमिति नियमेन सर्वतो बलिष्ठेन प्रतिवार्षिकश्राद्धातिरिक्तश्राद्धस्य चतुर्दश्यां निषेधात् ॥ (काश्मीरेषु नैतादृशमाचरणम्) एवं पौर्णमासीमृतस्यापि महालयः पौर्णमास्यां न कार्यः । अपरपक्षत्वाभावेन तस्यां महालयाप्राप्तेः । तेन चतुर्दशीमृतस्य पौर्णमासीमृतस्य वा महालयो द्वादश्यमावास्यादितिथिषु कार्यः ॥ अन्यदपि– आषाढीमवधिं कृत्वा यः पक्षः पंचमो भवेत् । स एव पितृपक्षस्तु पूजनीयः प्रयत्नतः । तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा ॥ कदाचिन्मलमासापरपक्षः पंचमो भवति । तत्रापि श्राद्धप्रसक्तौ भृगुः–एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् । हव्यकव्यक्रियाहन्ता तदा ज्ञेयो ऽधिमासकः ॥ महालयराजाभिषेककाम्यवृद्धिश्राद्धादीनि अधिमासे निषिद्धानि ॥ तीर्थे महालये चैव गयायां भास्करे युगे । पुत्रजन्मनि सोमार्कग्रहणे पितृपर्वसु । श्राद्धं विदध्यात्सर्वत्र ह्यष्टकाभिर्विवर्जितम् ॥ काम्यान्यपि तिथिश्राद्धानि नक्षत्रश्राद्धादीनि चात्र विहितानि । नन्दायां भार्गवदिने० इत्यादिना वर्ज्यान्यपि अत्रोक्तानि ।

परन्तु एतानि निषेधवचनानि मृततिथिं प्रति श्राद्धकर्तृविषयकाणि न सन्ति । मृततिथिं प्रति श्राद्धकर्तुः श्राद्धस्यास्य नित्यत्वात् । काम्यानि तु एतन्निषेधविषयाणि । अतो मघायुक्तत्रयोदश्यादिषु मृततिथिषु न पिण्डश्राद्धादिनिषेधः ॥ पिण्डश्राद्धनिषेधस्तु विद्यमानज्येष्ठपुत्रिणस्तदास्ति यदा मघायुक्तत्रयोदश्युद्देशेनैव श्राद्धं कर्तव्यं स्यात् । मृततिथिश्राद्धे तु महालयान्तर्गते नायं निषेधः इत्याशयः ॥ तथा चात्रैवोक्तम्- प्रतिदिनमपरपक्षश्राद्धकरणे पूर्वोक्ततिथ्यादिदोषो नास्ति (एवं च सति मृततिथावपि श्राद्धे नैष दोषः समानन्यायत्वात्) ॥ नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने । नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशीति ॥ दशम्यादिपक्षत्रये तु चतुर्दशी वर्जनीया ॥ यच्च त्रयोदश्यां युवानस्तस्य म्रियन्ते इतिकात्यायनवचनं तत्त्रयोदशीप्रयुक्तकाम्यश्राद्धविषयम् ॥ यस्य गृहे युवानस्तेन त्रयोदश्यां काम्यश्राद्धं न कर्तव्यमिति तस्यार्थः । अतोऽपरपक्षकाम्यश्राद्धाधिकारे मघायुक्तत्रयोदश्यां विद्यमानज्येष्ठपुत्रेण पिण्डरहितं श्राद्धं कर्तव्यमिति सिद्धम् नतु नित्ये तिथिश्राद्धे ॥ यच्चाङ्गिराः-त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः । पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम् इति श्राद्धमात्रं (श्राद्धमेव, नतु श्राद्धे पिण्डराहित्यं) निषिद्धं, तन्मातामहवर्गपरित्यागेन केवलपितृवर्गश्राद्धविषयम् ॥ श्राद्धं नैकस्य वर्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्तास्तस्य येत्र स्युः प्रजां हिंसन्ति तत्प्रजामिति कात्यायनस्मरणात् ॥ एवं च सति

(उभयवर्गश्राद्धकरणशासनेनापि ज्ञायते मृततिथिश्राद्धविषयमेतन्नास्ति । मृततिथौ तु मृतोद्देशेनैव त्रिपुरुषश्राद्धमेव विधीयते, नतु द्वादशदैवतम् ॥ अतो मृततिथिश्राद्धे त्रयोदश्यामपि मघायुक्तायां नैतानि निषेधवचनानि) ॥ अपरपक्षचतुर्दश्यां यथाशास्त्रं महाप्रस्थानादिभिर्मृतानामेकोद्दिष्टं श्राद्धं कर्तव्यं नान्येषाम् ॥ विषादिमृतानामप्यत्रैवैकोद्दिष्टमेव इति । कश्मीरे नैषाचारो मृततिथिश्राद्धे । सुमन्तुः—सूर्ये कन्यास्थिते कुर्यात् श्राद्धं यो न गृहाश्रमी । धनं पुत्राः कुतस्तस्य पितृनिःश्वासपीडनात् ॥ न सन्ति पितरश्चेति कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

ग्रहणकालः—

१. पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम । ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे ॥ पर्वान्त्यकाले ग्रासकालः । प्रतिपदादिकाले मोक्षकालः ॥ २. सन्ध्यायां रात्रौ च श्राद्धनिषेधेऽपि राहुदर्शने विधिरेव ॥ ३. चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् ॥ ग्रहणे संक्रमे वापि न स्नायाद्यदि मानवः । सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च जायते ॥ ४. सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने । स्नात्वा श्राद्धं प्रकुर्वीरन्दानं शाठ्यविवर्जितम् ॥ ५. चन्द्रे वा यदिवा सूर्ये दृष्टे राहौ महाग्रहे । अक्षयं कथितं पुण्यं तत्रार्के तु विशेषतः ॥ दर्शनं नाम शास्त्रतो दर्शनमङ्गीकर्तव्यम् ॥ अतो मेघादिच्छन्नेऽपि दिवा सूर्यग्रहे रात्रौ चन्द्रग्रहे

च स्नानदानश्राद्धाद्यधिकारः स्पष्टएव ॥ ६. एवं ग्रस्तास्तमये द्वितीयदिने मेघाच्छन्नत्वे शास्त्रमेव भोजने प्रमाणम् ॥ ७. चन्द्रसूर्यग्रहे नाद्यादद्याद्धा मुक्तयोस्तयोः । अमुक्तयोश्चास्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि ॥ ग्रहणे पूर्णिमाव्रतधारिणामपि यावन्मोक्षकालमुपवास एव ॥ ८. अशक्तौतु– अर्वाग्यामत्रयादिन्दोर्ग्रहणे भुजिमाचरेत् । चतुर्यामादधश्चैव राहुग्रस्ते दिवाकरे (अर्वागध इति पूर्वमित्यर्थः) ॥ एतदपि बालवृद्धातुरैर्विना ॥ ६. ग्रस्तोदये तु–यदा चन्द्रग्रहणे ग्रस्तोदयः तदा तस्मिन्नहनि नाद्यात् । यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु । मुक्तिं दृष्ट्वा तु भुंजीत स्नानं कृत्वा ततः परम् ॥ १०. सूर्ये ग्रस्तास्तंगतेऽहोरात्रे भोजननिषेधः । एवं चन्द्रे ग्रस्तास्तङ्गते ग्रहणरात्रिरग्रिमाहश्चेत्यहोरात्रे भोजननिषेधः ॥ ११. सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु तच्छ्राद्धं पंके गौरिव सीदति ॥ १२. चन्द्रसूर्यग्रहणं यावद्यानुषदर्शनयोग्यं तावत्पुण्यकालः ॥ अतो ग्रस्तास्तस्थलेऽस्तोत्तरं न पुण्यकालः । एवं ग्रस्तोदये उदयात्पूर्वं नतु पुण्यकालः ॥ १३. रविवारे सूर्यग्रहे चन्द्रवारे चन्द्रग्रहे च चूडामणिसंज्ञे दानादावनन्तं फलम् ॥ वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः । तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतम् ॥ १४. ग्रहणस्य स्पर्शकाले स्नानं, मध्ये होमः, सुरार्चनं श्राद्धं च, मुच्यमाने दानम् ॥ १५. मुक्तेऽपि स्नानम् ॥ गंगादितीर्थानि पुण्यानि, पुण्यात्पुण्यस्ततोम्बुधिः ॥ ग्रहणे मुक्तिस्नानाभावे सूतकित्व

नपगमः । सुवासिनीनामशिरःस्नानम् । शिष्टस्त्रीणां तु शिरः स्नानम् ॥ स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ जातमृतोभयाशौचेपि स्नानदानश्राद्धादि कार्यमेव ॥ १६. पुत्रवद्गृहिणो ग्रहणसंक्रान्त्यादौ नोपवासः । संक्रान्त्यादौ निराहारव्रतेपि अपां प्राशनमेव न तु फलाद्याहारः । १७. तपोविद्योभययुक्तं मुख्यं दानपात्रम् ॥ १७. श्राद्धमामेन. सम्पन्नश्चेत्पक्वान्नेन कुर्यात् ॥ ग्रहणे श्राद्धभोक्तुर्महादोषः ॥ १८. ग्रहणे मंत्रोपदेशः पुरश्चरणविधिश्च धर्मसिन्ध्वादिग्रन्थेषु द्रष्टव्यः ॥ १९. स्वेष्टदेवतामंत्रजपो गायत्रीमंत्रजपश्चावश्यं ग्रहणे कार्यः, अन्यथा मंत्रमालिन्यम् ॥ २० ग्रहणे शयने कृते रोगो, मूत्रे दारिद्र्यं, पुरीषे कृमिः, मैथुने ग्रामसूकरो, ऽभ्यङ्गे कुष्ठी, भोजने नरकः इति ॥ २१. पूर्वपक्वमन्नादि ग्रहणोत्तरं त्याज्यम् । जलमपि ग्रहणकालस्थितं पानानर्हम् । परंतु काञ्जिकं तक्रं घृततैलपाचितमन्नं क्षीरं पूर्वसिद्धं ग्रहणोत्तरं ग्राह्यम् । घृते सन्चिते गोरसेषु कुशान्तरायं कुर्यात् ॥ २२. सूर्यग्रहे ग्रहणात्पूर्वं यामचतुष्टयं वेधः । चन्द्रग्रहे तु प्रहरत्रयं वेधः । २३. ग्रस्तास्ते तु उदयकालिकस्नानात्पूर्वं जलाहरणपाकादिकं न कार्यं स्नानात्पूर्वं देहस्याशुद्धेः स्पर्शानर्हत्वात् ॥ २४. स्वजन्मराशेस्तृतीयषष्ठैकादशदशमराशिस्थितं ग्रहणं शुभदम् । २, ७, ६. ५, स्थानेषु मध्यमम् । १, ४, ८, १२, राशिस्थितं अनिष्टम् ॥ यस्य जन्मराशौ जन्मनक्षत्रे वा ग्रहणं तस्य विशेषतोऽनिष्टम् ॥

अतस्तेन शान्तिः कार्या । अथवा चन्द्रग्रहे रजतमयं चन्द्र-बिम्बं, सुवर्णमयं नागबिम्बं च कृत्वा, सूर्यग्रहे सौवर्णं सूर्य-बिम्बं नागबिम्बं च कृत्वा, घृतपूर्णे ताम्रपात्रे कांस्यपात्रे वा निक्षिप्य तिलवस्त्रदक्षिणासाहित्यं सम्पाद्य संकल्पपूर्वकं पात्राय दद्यात् ॥ २५. यस्य जन्मराश्यादिष्वनिष्टस्थानेषु ग्रहणं, तेन ग्रस्तं रवीन्दुबिम्बं नावलोकनीयम् ॥ इतरैरपि पटजला-दिव्यवधानेनैव ग्रस्तबिम्बं द्रष्टव्यं, नतु साक्षात् ॥ २६. मङ्गलकार्येषु ज्योतिर्निबन्धानुसारेण पूर्वतः परतश्च दिनानि ग्रहणे वर्ज्यानि ॥ २७. अत्र समुद्रस्नानं भृगुभौमदिने वर्जयेत् ॥

## रजोदोषनिर्णयः—

१. आरम्भात् प्राग्विवाहादेः (नान्दीमुखश्राद्धात्पूर्वमित्यर्थः 'नान्दीमुखं विवाहादौ, इत्यादिना तस्यैव प्रारम्भोक्तेः) माता यदि रजस्वला भवेत्तदा तत्पुत्रस्य मातृरजोदोषनिवृत्तावेव विवाहादि विधेयम् ॥ नान्दीश्राद्धे कृते यस्य भार्या रजस्वला भवेत् । विवाहे नैव दोषः स्याद्दोषः स्याद्व्रतबन्धने ॥ नान्दीश्राद्धोत्तरं रजोदोषे तु कपर्दिकारिकासु- सूतिकोदक्ययोः शुद्धौ गां दद्याद्धोमपूर्वकम् । हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् ॥ प्रत्यृचं पायसं हुत्वा चाभिषेकं समाचरेत् इति ॥ सूतकादिसङ्कटे तु कूष्माण्डीभिर्घृतं हुत्वा पयस्विनीं गां च दत्त्वा विवाहादि कुर्यात् ॥ २. कन्याया रजोदर्शने तु मातापितृज्येष्ठभ्रातृणां नरकपातः । तत्प्रायश्चित्तमुक्तमाश्वला-यनेन-कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः । शुद्धिं च

कारयित्वा तामुद्वहेदनृशंसधीः ॥ दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि । दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥ दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् । तदृतीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः । अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥ तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः ॥ ३. बौधायनसूत्रम्-अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमंत्रयेत्-पुमांसौ मित्रावरुणौ पुंमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमांसं च दधात्वियम् ॥ प्राशयेत्पंचगव्यमथ शुद्धां कृत्वा विवहेत् इति ॥ ४. सूतिकामरणे रजस्वलामरणे च- कुम्भे सलिलमादाय पंचगव्यं तथैवच । पुण्यर्ग्भिरभिमंत्र्यापो वाचा शुद्धिं लभेत सा । तेनैव स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥ वृद्धशातातपस्तु-रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत् (नारायणबलिरुपायः) ऊर्ध्वं त्रिरात्रात्स्नाता या शवधर्मेण दाहयेत् ॥

## सापिण्ड्यम् विवाहे ॥

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं साप्तपौरुषम् ॥ इति मात्स्योक्तेरेकस्यां पिण्डदानक्रियायां दातृत्वपिण्डभाक्त्वलेपभाक्त्वान्यतरसंबन्धेन प्रवेशो निर्वाप्यसापिण्ड्यमिति केषां चिन्मतम् । अत्र स्त्रीणामपि पतिभिः सह कर्तृत्वात्सापिण्ड्यसिद्धिः । मूलपुरुषैकशरीरावयवान्वयेनावयवसापिण्ड्यमित्यपरं मतम् । यद्यपि अत्र

पत्नीनां परस्परं नैतत्सम्भवति, तथाप्याधारत्वेनैकशरीरान्वयः । एकमूलपुरुषावयवानां पुत्रद्वारा तास्वाधानादिति ज्ञेयम् ॥ एकशरीरान्वयस्य सप्तमात्परेषु परःशतेष्वपि सत्त्वादतिप्रसङ्गप्राप्तेः "वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पंचमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते,, इत्यादिवचनैर्निरासः ॥ मातृत्वपितृत्वादिसम्बन्धे सत्येव-पञ्चमसप्तमपर्यन्तमेवेत्युभयनियमस्वीकारात् ॥ अत्रोदाहरणानि ॥

| विष्णुः १ | | विष्णुः १ | |
|---|---|---|---|
| कान्तिः २ | गौरी २ | दत्तः २ | चैत्रः २ |
| सुधीः ३ | हरः ३ | सोमः ३ | मैत्रः ३ |
| बुधः ४ | मैत्रः ४ | सुधीः ४ | बुधः ४ |
| चैत्रः ५ | शिवः ५ | श्यामा ५ | रतिः ५ |
| गणः ६ | भूपः ६ | शिवः ६ | गौरी ६ |
| मृडः ७ | अच्युतः ७ | | |
| रतिः ८ | कामः ८ | | |

अत्राष्टमयोर्विवाह इष्टः पितृद्वारकत्वात् ।

अत्र गौरीशिवयोः षष्ठयोर्विवाह इष्टो मातृद्वारकत्वात् ॥

| विष्णुः १ | | विष्णुः १ | |
|---|---|---|---|
| दत्तः २ | चैत्रः २ | दत्तः २ | चैत्रः २ |
| सोमः ३ | मैत्रः ३ | सोमः ३ | मैत्रः ३ |
| सुधीः ४ | बुधः ४ | सुधीः ४ | बुधः ४ |
| श्यामा ५ | नर्मदा ५ | श्यामा ५ | शिवः ५ |

| | | | |
|---|---|---|---|
| शिवः ६ | कामः ६ | कान्तिः ६ | हरः ६ |
| रमा ७ | कविः ७ | अत्र कान्तिहरयोर्न विवा- | |
| अत्र रमाकव्योर्न विवाहः | | हः । एकतो निवृत्तावप्य- | |
| मण्डूकप्लुत्या सापिण्ड्या- | | न्यतः अनुवृत्तेः ॥ + | |
| नुवृत्तेः ॥ * | | | |

---

* कूटस्थात् पंचम्योः कन्ययोः सन्ततौ मातृद्वारकत्वात्सा-पिण्ड्यनिवृत्तिः । परंतु पंचम्योः कन्ययोर्यौ पुत्रौ तयोः स-न्ततौ पितृद्वारकत्वात्सापिण्ड्यमनुवर्तत एवेति मण्डूकप्लुति-सापिण्ड्यम् ॥ + यद्यपि कान्तेर्मातृद्वारकत्वात्सापिण्ड्यं निवर्तत एव तथापि द्वितीयसन्ततिपंक्तौ पंचमषष्ठादेः पितृद्वारकत्वा-दिना सापिण्ड्यसत्त्वादेकतो निवृत्तावप्यन्यतोऽनिवृत्त्या पंच-मषष्ठादिना पंचम्याः कन्यायाः सन्ततिर्न विवाह्या ॥ एवं पि-तृद्वारकसापिण्ड्यं सप्तमादूर्ध्वं निवर्तते मातृद्वारकं तु पचमा-दूर्ध्वमिति मुख्यकल्पः । अनुकल्पानुसरणं तु न कर्तव्यमिति ॥ कौस्तुभे तु- "उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् । पंचमीं तदभावे तु पितृपक्षेष्वयं विधिः ॥ सप्तमीं च तथा षष्ठीं पं-चमीं च तथैवच । एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्यो यमोऽङ्गिराः । यस्तु देशानुरूप्येण कुलमार्गेण चो-द्वहेत् ॥ नित्यं संव्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते,, इत्यादि वचनानां चतुर्विंशतिमतषट्त्रिंशन्मतादिषूपलभ्यमानत्वात्सा-पिण्ड्यसंकोचेन विवाहस्य बहुदेशेषु दर्शनाच्च येषां कुले दश

चानुकल्पत्वेन सापिण्ड्यसंकोचः परम्परागतः तेषां सापिण्ड्यसंकोचेन विवाहो न दोषाय । अन्यथा तु दोष एव ॥ अत्रायं सापिण्ड्यदीपिकादिसिद्धार्थसंग्रहः– १ तृतीया मातुलकन्यैव देशकुलाचारादुद्वाह्या । २ चतुर्थी चतुर्थपंचमाभ्यामेव । ३ पंचमी पंचमभिन्नैः तृतीयाद्यैः सप्तमान्तैः । ४ षष्ठी पंचमषष्ठाभ्यामेव ॥ ५ सप्तमी तृतीयाद्यैः सप्तमान्तैरिति ॥ अयं सापिण्ड्यसंकोचेन विवाहः संकटेष्वशक्तेन कार्यः । कन्यान्तरलाभे शक्तैर्न कार्यः । गुरुतल्पादिदोषस्मृतेः ॥ सापत्नमातृकुले लक्षणया चतुः पुरुषसापिण्ड्यविवाहनिषेधाय विधीयते इति केचित् । बौधायनः–मातुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत् । पितृव्यपत्नीभगिनीं तत्सुतां च विवर्जयेत ॥ केचित्–ज्येष्ठो भ्राता पितुः सम इत्युक्तेः ज्येष्ठभ्रातृपत्न्या भगिनी मातृस्वसृतुल्यत्वान्नविवाह्येत्याहुः ॥ दत्तकस्य जनककुले साप्तपौरुषं सापिण्ड्यम् । जननीकुले पांचपौरुषम् ॥ पालकपितृकुले तु पांचपौरुषम् पालकमातृकुले त्रिपुरुषम् ॥ तथा चापरार्के पैठीनसिः– 'त्रीन्मातृतः पंच पितृतः पुरुषानतीत्योद्वहेत् इति (एतत्सएव व्याचख्यौ– 'दत्तकादीन्पुत्रान् पितृपक्षतो निवृत्तपिण्डगोत्रार्षेयान् प्रत्येतदुच्यते पंच पितृत इति नान्यान्प्रति इति, ॥ निर्णयसिन्धौ तु उभयोरेव कुलयोः साप्तपौरुषं सापिण्ड्यं । मातृकुलयोरपि पांचपौरुषम् ॥ धर्मसिन्धौतु– ग्रहीतृकृताखिलसंस्कारस्य दत्तकस्य ग्रहीतृकुले साप्तपौरुषं मातृतः पांचपौरुषम् । अतो न्यून जनककुले [illegible] ॥

एवं दत्तकसंततेरपि सापिण्ड्यं ज्ञेयम् ॥ विवाहे दत्तकेनोभयोर्जनकपालकयोरपि पित्रोर्गोत्रप्रवरसम्बन्धिनी कन्या वर्ज्या॥
१. एतत् षाट्कौषिकं शरीरम्, त्रीणि पितृतः अस्थि स्नायुमज्जानः इत्यर्थः। त्रीणि त्वक् मांस रुधिराणि मातृतः इति गर्भोपनिषदि॥ असपिण्ड्या च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ अस्यार्थः- या मातुरसपिण्डा चकारादसगोत्रा च । या च पितुरसगोत्रा चकारादसपिण्डाच। सा दारकर्मणि मैथुने च प्रशस्ता विवाहार्हा ॥ २. अनुलोमक्रमेण द्विजातीनां सवर्णापाणिग्रहणसमनन्तरं तत्रजादिकन्यकापरिणयो विहितः ॥ तत्र च सवर्णाविवाहो मुख्यः। इतरस्त्वनुकल्पः । सदारस्य विहितं कर्मद्वयम् । एकं यज्ञादिकं । अपरं निधुवनम् । यज्ञादिके तु सवर्णीयदारैः सहितस्यैवाधिकारः। सवर्णायास्तु वयसा वर्णेन वा ज्येष्ठत्वेन तस्यां सत्यामन्यस्या अनधिकारात् ॥ असत्यां ज्येष्ठायां नित्ययज्ञादिकेष्वेवासवर्णासहितस्य गौणाधिकारो न काम्येषु ॥ तथा ज्येष्ठापरित्यागेनान्यग्रहणनिषेधाच्च ॥ सुरते तु विवाहितास्वऽनियमः ॥ ३. याज्ञवल्क्यः- पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति । सापिण्डयं निवर्तते इत्यर्थः ।
४. सन्तानभेदेपि यतः सन्तानभेदस्तमादाय गणयेद्यावत्सप्तमो भवति॥ ५. पित्रादिबीजतो नियोगादिना या कुलान्तरे जाता, तत्रापि ऊर्ध्वं सप्तमाज्जातायां विवाहः ॥ ६. यच्च वसिष्ठोक्तं- पंचमीं सप्तमीं चैव मातृतः पितृतस्तथेति तत्

सवर्णसापत्नमातामहकुलविषयम्, ब्राह्मणादीनां क्षत्रियादिदा-रसमुत्पन्नपितृकुलविषयं च ॥ एकत्रावयवानुवृत्तेरभावात् अ-न्यत्र गोत्रानुवृत्तेरभावाच्च ॥ ७. त्रैपौरुषमेव सापिण्ड्यमिति यत् शंखवचनं एतद्भिन्नजातीयसापत्नमातृकुलविषयम् ॥ ८. मातृसापिण्ड्याभावेऽपि मातृसगोत्राया अपि पाक्षिको निषेधो व्यासेन दर्शितः 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि, एके इत्यनेन पक्षे विवाहो दर्शितः ॥ ९. स्वयंवरकन्यायाः पित्रादेरलं-कारानादानम् ॥ १० वरणादुग्रहणं पाणेः ससंस्कारोऽग्निलक्षणः । तयोरनियतं प्रोक्तं वरणं ( वाग्दानं ) दोषदर्शनात् इति । वरणं दोषदर्शने व्यभिचरति, न संस्कारः ॥ ११. सप्तमपदादर्वाक् ( पूर्वं ) परिणेतृमरणेऽपि न विधवात्वमिति गम्यते । उक्तं च वसिष्ठेन– अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि । नच मंत्रोपनीता स्यात् कुमारी पितुरेव सेति ॥ सा च तद्देवराय प्रदेया । तदभावे तद्गोत्राय । तदभावे त्वन्यस्मै ॥ १२. बला-द्यापहृता कन्या मंत्रैर्यदि न संस्कृता । अन्यस्मै विधिवद्देया यथा कन्या तथैव सा इति वसिष्ठयमौ ॥ १३. ज्येष्ठानुक्रमे-णायं विवाहः । अन्धादौ सति नायं नियमः ॥ १४. वैश्यशू-द्रवृत्तेर्विप्रादेरपि पैशाचो विवाहो ग्राह्यः आपदि ॥ सर्वोपा-यैरसाध्या स्याद्या कन्या पुरुषस्य वै । चौर्येणापि विवाहेन सा विवाह्या रहःस्थितेति वत्सः । चौर्येण पैशाचविधिनेत्य-र्थः ॥ वैश्वदेवविधिः ॥ १. जुहुयात्सर्पिषाभ्युक्त्य तैलक्षारविवर्जितम् । दध्यक्तं पयसाभ्यक्तं तदभावे ऽम्बुनापि वा ॥

२. हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले । पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ॥ (अन्नाभावे एतत्) ३. उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम्। संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥ ४. हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः । माषकोद्रवगौरादीन्सर्वाभावेपि वर्जयेत् ॥ गौराः—गौरसर्षपाः। आपस्तम्बः—न क्षारलवणहोमो विद्यते॥ मुद्गमाषादृते सिम्ब्यं सस्यं, गोधूमकोद्रवाः। इत्यादिरेष क्षारगणः स्मृतः। (अत एवात्र प्राचीनाः काश्मीरिकास्तण्डुलपिष्टापूपैरेव वैश्वदेवं विदधते स्म) वैश्वदेवार्थं पितृपाकात्पृथक् पाकः कर्तव्यः ॥ ५. न चुल्ल्यां नायसे पात्रे न भूमौ नच कू (ख) र्परे । वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेपि वा ॥ दग्धान्नं पायसं चैव काञ्जीपाकं तथैवच । अपक्वं घृतपक्वं च वैश्वदेवे विवर्जयेत् ॥ पितृपाकाद्वैश्वदेवकारिणः श्राद्धमासुरम् ॥ अग्नीषोमौ च द्वौ पार्श्वे नव पूर्वाभिगामिनः । ऐशान्यां स्विष्टकृच्चैव वैश्वदेवविधिः स्मृतः ॥ तत्त्वादीनामूर्ध्वभागे दद्यान्मन्त्रेण वै जलम्। दक्षिणोत्तरभागेन बलिं स्वायम्भुवोऽब्रवीत् ॥ दर्भानास्तीर्य याम्याग्रान्पिण्डान् (श्राद्धे) प्रागादितो न्यसेत्। नित्ये तु पश्चिमादिः स्यात् श्रुतिरेषा सनातनी ॥ (वैश्वदेवमें पितृबलियां पश्चिमसे आरम्भ करके उत्तरसे दक्षिणकी तरफ तीन २ रखनी चाहिए । एवं पूर्वकी ओर जाना । श्राद्धपिण्ड तो कुशाके मूल मध्य तथा अग्रभागोंमें तीन २ करके पूर्वसे पश्चिम तक रखने चाहिए) ॥ विवाहविधिः—

१. प्रजावत्यां तु भार्यायां मृतायां ब्राह्मणस्य तु । प्रथमाब्दे न कर्तव्यो विवाहोऽशुभदो भवेत् पितृमातृपत्नीसुतभ्रातृणां मरणे वर्षमर्धं तदर्धं मासं वा मंगलं न कर्तव्यम् ॥ २. मार्गे मासे तथा ज्येष्ठे क्षौरं परिणयं व्रतम् । ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥ मुहूर्तदर्पणे वराहः—ज्येष्ठे ज्येष्ठस्य कुर्वीत भास्करे चानलस्थिते (कृत्तिकास्थिते)। नोत्सवादीनि कार्याणि दिग्दिनानि च वर्जयेत् ॥ ज्येष्ठद्वन्द्वं मध्यमं संप्रदिष्टं त्रिज्येष्ठं स्यान्नैव युक्तं कदापि। केचित्सूर्यं वह्निगं प्रोज्झ्यमाहुर्नैवान्यथा ज्येष्ठयोः स्याद्विवाहः ॥ ज्येष्ठे न ज्येष्ठयोः कार्यं नृनार्योः पाणिपीडनम् । तयोरन्यतरे ज्येष्ठे ज्येष्ठोऽपि न विरुध्यते ॥ जन्ममासि जन्मभे जन्मदिवसेपि नैतयोर्विवाहः ॥ आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत्। जन्ममासः स विज्ञेयः सर्वकर्मसु गर्हितः ॥ जातेर्दिनं दूषयते वसिष्ठः पंचैव गर्गस्त्रिदिनं तथात्रिः । तज्जन्मपक्षं किल भागुरिस्तु व्रते विवाहे गमने क्षुरे च ॥ जन्मत एव गणनया जन्ममास इति केचन। केचिन्मासापेक्षया । न्यूनाहे कृष्णपक्षे यमदंष्ट्राख्ये विवाहोपनयनचौलादीनि निषिद्धानि । न्यूनाहेऽपि शुक्लपक्षे धर्मयोगाख्ये चौलादिकरणं विहितमेव ॥ मलिम्लुचे क्षयाहे च सिंहस्थे च दिवाकरे । जीवे च न्यूनपक्षे वा मंगलानि विवर्जयेत् इत्यत्र वाशब्दस्य विकल्पार्थत्वाच्च समुच्चयार्थत्वमित्यतो मंगलविधिरपि एकतरपक्षे प्रतीयते ॥ विवाहाच्चोपनयनाद्वर्षं



वर्षार्धमेव च । न तिलैरर्चयेत्पितॄन्मुण्डनं च तथा... ॥ कृतो-

द्वाह्योपि पित्रोः पिण्डनिर्वपणं कुर्यादेव ॥ ३. शुक्रगुरुयोरुद‍यास्तयोर्बाल्यवृद्धत्वे काश्मीरिकास्त्रिदिनं वर्जयन्ति ॥ ४. बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः । महोत्सवे च मंगल्ये तत्र स्त्रीणां शुभध्वनिः ॥ इति मत्स्यसूक्ते ॥ मत्स्यपुराणे–मङ्गल्यानि च वाद्यानि ब्रह्मघोषं च गीतकम् । ऋद्ध्यर्थं कारयेद्विद्वानमंगलविनाशनम् ॥ ५. विवाहे आसनार्थं विष्टरस्तु सार्धद्वितयवामावर्तवलिताधोमुखाग्रा असंख्यातदर्भाः । 'वामावर्तस्तु विष्टरः', इतिगृह्यासंग्रहः ॥ उदगग्रं विष्टरमास्तीर्य उपरि पादौ तूष्णीं कुर्यादिति सरला ॥ ६. दधिमधुमात्रेण मधुपर्काभिधानं घृतासम्भवपरम् । तत्सम्भवे गोभिलः–मधुपर्कं दधिमधुघृतं पिहितं कांस्यस्थं कांस्येनेति ॥ ७. गृह्यपरिशिष्टे–सर्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः इति । (दाने) कन्यादाने तु– प्राङ्मुखायाभिरूपाय वराय शुचिसन्निधौ । दद्यात्प्रत्यङ्मुखः कन्यां क्षणे लक्षणसंयुते ॥ महाभारते– रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम् । विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥ प्रतिश्रयः–प्रवासिनामाश्रयः ॥ ८. ग्रहादिदोषशान्त्यर्थं दानादिकं विवाहात्प्रागेव कर्तव्यमिति । पाणिग्रहणिका मंत्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ १०. सम्प्रदानकरे जलपूर्वकं दानमाहापस्तम्बः–सर्वाण्युदकपूर्वाणि दानानीति ॥ ११. ओंकारमुच्चरन्प्राज्ञो द्रविणं सकलमोदनम् । गृहीत्वा दक्षिणे हस्ते तदन्ते स्वस्ति कीर्तयेत् । ओंकारस्य स्वीकारार्थत्वाच्चे·

नैवात्र प्रश्नप्रयुक्तम्—विष्णुधर्मोत्तरे ॥ प्रावृतां यज्ञोपवीतिनीम् वधूं यज्ञोपवीतवत्कृतोत्तरीयपरिधानामित्यर्थः ॥ यथा यज्ञोपवीतं च धार्यते हि द्विजोत्तमैः । तथा सन्धार्यते यत्नादुत्तराच्छादनं शुभम् । वध्वा इतिशेषः ॥ १२. कन्यादानाधिकारिणः— पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदाः पूर्वनाशे प्रकृतिस्थः परः परः ॥ सकुल्यो दायादः । तत्रापि सन्निहित एवाधिकारी । प्रकृतिस्थ उन्मादादिदोषरहितः । अप्रकृतिस्थेन कृतमप्यकृतमेव वाग्दानादिकम् । नारदोक्तो दातृक्रमः— पिता दद्यात्स्वयं कन्यां भ्राता चानुमते पितुः । मातामहो मातुलश्च सकुल्यो बान्धवास्तथा । माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते ॥ तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः । सकुल्याः—पितृपक्षीयाः । बान्धवा मातृपक्षीयाः । स्वजातयो ब्राह्मणादयः । सर्वाभावे राजाधिकारी ॥ १३. पाणिग्रहणमंत्रजपसमाप्तेः पूर्वं वधूवरौ पाणिग्रहणं न मुञ्चेताम् । इत्याह—'हुत्वाज्यमथ जायायामन्वारभ्याञ्जलिम्पतिः । न विमुञ्चेदनापत्सु यावत्पाणिग्रहो जपः, इति ॥ अत एव वध्वा भ्राताऽन्यो वा ब्राह्मणो लाजाञ्जलिं वध्वञ्जलावावपति आवापः प्रधानाहुतिः । तं सोपस्तीर्णाभिघारितमविच्छिन्दती (अञ्जलिभेदमकुर्वती) वधूर्भ्रातृद्वारा ब्राह्मणद्वारा वाग्नौ जुहुयात् ॥ अर्थः—उपस्तरणाय अथ आस्तरणाय वरो घृतस्रुवं वध्वञ्जलौ ददाति । ततो भ्राता ब्राह्मणो वा लाजान्ददाति । तदुपरि अभिघारणाय घृतस्रुवद्वयं ददाति वरः । इतिवृत्त-

वर्त्तयते ॥ भृगुगोत्रो भार्गवप्रवरश्चेत्तदा पञ्चावर्त्तायोपस्तरणे घृतस्रुवद्वयमिति विशेषः॥(१४) प्रागुदीचीं दिशमाभिमुख्येन दक्षिणपादपुरःसरेण एकमिषे इत्यादिसप्तभिर्मन्त्रैर्वधूं प्रक्रामयति ॥ केचिद्दक्षिणेनैव पादेन सप्तैव क्रमा इत्याहुः ॥ १५. पाणिग्रहणे वध्वा उत्तानं साङ्गुष्ठं दक्षिणं पाणिं नीचैः स्थितेन दक्षिणेन पाणिना गृहीत्वा, एवं सव्यं सव्येन ॥ साङ्गुष्ठमित्यनेन तर्जन्यादीनां ग्रहणम्।उत्तानमित्यनेन करस्य पृष्ठग्रहणं प्रतीयते ॥ (अधःस्थकरस्य तलेन वरो वधूकरपृष्ठमुत्तानं करमित्यर्थः गृह्णीयात् अरिक्तमरिक्तेन सौवर्णोर्मिकासहितेन) १६. उलपराजीः० इत्यादौ। इदानीं तु तथाविधानाचरणात् वेद्यामेव पूर्वस्थापिताग्नेः पश्चिमतः कर्म कर्तव्यं, नत्वग्न्यन्तरस्थापनम् । तथाच भट्टभाष्ये 'वेद्यामेव चेत्तन्त्रेण स्यात् इति, ॥ अत्र युगधर्मानुरूप्येणानडुहरोहितचर्मोपवेशनाद्यङ्गाभावेपि कर्मणः प्राधान्यादाज्यहोमादिकं कर्तव्यमेव ॥ स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे । पतिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया इति॥१७. सम्यगशनार्थं क्रियते इति समशनीयं स्थालीपाकं कुर्वीत ॥ तस्य देवताग्निः प्रजापतिश्च । केषांचिन्मते विश्वेदेवा अनुमतिश्चेति ॥ अत्रतु "अग्निं प्रजापतिं चेष्ट्वा,, इत्यादिस्वगृह्यानुसारतोस्यैवान्नस्याहुतिद्वयमेव होतव्यम्।नत्वेता धारणाहुतयोत्र मन्तव्याः । पत्नीसत्त्वेनाग्न्याधानयोग्यत्वे सति गृहपतित्वावसरएव पुनराधाने कृते धारणाहुतयो दातुं योग्याः । नतु पत्नीस-

वायामपि पुनरन्वाधानाभावे। किंच धाराहुतयो न कापि
पक्वान्नेन दीयन्ते । तास्तु तिलतण्डुलयवादिभिः । एतदाहु-
तिद्वयं च समशनार्थं कृतस्य स्थालीपाकस्याग्रयाहुत्याख्यम्।
यथा वैश्वदेवस्य सिद्धस्य सर्वतोऽग्रथस्येत्यादौ। तस्मादाहुति-
द्वयमेवात्र देयम् ॥ १८. विवाहे प्रायश्चित्तयागः-प्रायश्चित्ति-
लिङ्गैर्मन्त्रैर्यत्राज्याहुतीर्वरो जुहोति स प्रायश्चित्तयागः। यदि
त्वशक्तेः कुलाचाराद्वा विवाहदिन एव चतुर्थीहोमः क्रियते।
तदा तत्समाप्तावेवोदीच्यं कर्म तन्त्रेण कर्तव्यम् । (विवाह-
समाप्तावेवोत्तरकालीनं चतुर्थीहोमरूपं कर्म कार्यम्) गोभि-
लः- 'अथातश्चतुर्थीकर्म, विवाहतिथ्यनन्तरं चतुर्थ्यां तिथौ
वक्ष्यमाणं कर्म वर्तिष्यते इति वाक्यार्थः। अतः शब्दो हेत्व-
र्थे, यत एतदकरणे योऽस्या अलक्ष्म्यादिदोषः शरीरान्नापैति,
तत एतदवश्यं कर्तव्यम् ॥ अग्निमुपसमाधाय प्रायश्चित्ताहुती-
र्जुहोति अग्ने प्रायश्चित्तेरित्यादीः ॥ (विवाहयागानन्तरं प्रा-
यश्चित्तयाग एव चतुर्थीकर्म। यत्फलं चालक्ष्म्यादिदोषनिवृत्ति
रित्याशयः) ॥ १९. चतुर्थीकर्मानन्तरमेव तौ वधूवरौ प्रजा-
कामौ संविशतः ॥ (२०) (पारणाचोट) 'तस्याः कुमारमु-
पस्थे आदध्युः, तस्या वध्वाः कुमारमकृतचौडं बालकमुपस्थे
क्रोडे उपवेशयेयुर्ब्राह्मण्यः। तस्मै अञ्जलौ फलानि ब्राह्मण्यो
दद्युः ॥ (अत्र काश्मीरिकाचारोऽन्य एव) ॥

उपनयनम्— १. यस्मिन्नग्नावुपनयनहोमः कृतस्तं स्नानव्रतं
यावद्धारयेत । तस्मिन्नेवैविधिकादयो व्रतहोमाः । तमेव सायं

प्रातरिन्धीत (अतोऽस्य संस्कारवर्गस्य दिनद्वयादिव्यातावपि स एवाग्निः प्राक्प्रतिष्ठित एवाविसर्जितो द्वितीयादिदिनार्थं स्थापनीय इति) ॥ २. ऋगाद्यध्ययनानन्तरं ब्रह्मचारी नमो ब्रह्मणे इत्यादि परिदधाति, परिधानं त्रिः पठनम् ॥ शाङ्खिप्रज्ञादिकमपेक्ष्य प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्यम् । नैष्ठिकब्रह्मचर्यापेक्षं चात्राष्टाचत्वारिंशद्वर्षाणि । आश्रमान्तरार्थिना तु सर्वथा प्रज्ञाद्यनुसारेण वेदैकदेशमधीत्य गृहस्थधर्ममनुष्ठातव्यम् ॥ ३. छन्दस्यर्थान्बुद्ध्वेत्यादि-विधान्ते हि आचार्येण शिष्याय स्नास्यते मधुपर्को देयः । अवाप्तमधुपर्कश्च स शिष्यस्तमाचार्यं भिक्षाहृतया दक्षिणयार्हयेत् । गुरुणानुज्ञातश्च स्नायात् । स्नात्वा च भार्यामधिगच्छेत् ॥ ४. उपकुर्वाणो नैष्ठिकश्चेति ब्रह्मचारी द्विविधः । ब्रह्मचर्यं चरित्वा दारपरिग्रहादिकं संश्रयेत यः, स उपकुर्वाणः । नैष्ठिकः सः, यो यावज्जीवितं ब्रह्मचर्येण निष्ठां गमयति ॥ ५. वाराह्योपानहाविति-केचित् वाराहशब्दं सन्निवेशविशिष्टपादुकावाचकं व्याचक्षते ॥ ६. मृगाजिनस्य वस्त्रसंज्ञाभावात् एकवस्त्र एव ब्रह्मचारी । तदूर्ध्वं तु द्विवस्त्रः छत्रधारी कुण्डलादिधारी च ॥ ७. अथातोऽष्टाचत्वारिंशत्संमितं व्रतं कृतमपि चेत्स्यात्तथापि वार्षिकमेतद् व्रतं तपोतिशयसिद्ध्यर्थं पुनरपि कर्तव्यमिति केचित् । केचित्तु यस्याधीयानस्य यथाकालं व्रतं न सम्पन्नं तेन चैतत्कर्तव्यम् ॥ कलौ तु दीर्घकालब्रह्मचर्यनिषेधात् [illegible] द्वादशवर्षाणि ब्रह्मचर्यमभिप्रेतं न सम्पन्नं, तस्य मासत्रयमेष

विधिः इति स्नास्यतः पश्चादुपदेशः ॥ ८. उपनयनकालः—गर्भा-
ष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो ग-
र्भात्तु द्वादशे विशः ॥ काम्यकालः, ब्रह्मवर्चसकामस्य कार्यं
विप्रस्य पंचमे ॥ तथा—सप्तमे ब्रह्मवर्चसकामं, अष्टमे आयु-
ष्कामं, नवमे तेजस्कामं, दशमेऽन्नाद्यकामं, एकादशयिन्द्रिय-
कामं, द्वादशे पशुकाममुपनयेत् इति ॥ ९. शुक्लमहतं कार्पा-
सं ब्राह्मणस्य । माञ्जिष्ठं क्षौमं क्षत्रियस्य । पीतं कौशेयं वैश्य-
स्येति ॥ १०. मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मे-
खला । मुञ्जाभावे कुशाभिः । त्रिवृता ग्रन्थिनैकेन त्रिभिः प-
ञ्चभिरेवच ॥ ११. तन्तुत्रयमधोवृतं पुनः त्रिवृत् (त्रिगुणीकृतं)
ऊर्ध्ववृतं कार्यम् । पुनरपि एकेन ग्रन्थिना सहितं त्रिवलितं
उपवीतसंज्ञम् ॥ संहताङ्गुलिमूलेषु षण्णवत्या सूत्रमावर्तयेत् ।
शुचिः शुचौ देशे ॥ १२. केशान्तिको ब्राह्मणस्य दण्डः कार्यः
प्रमाणतः । ललाटसम्मितो राज्ञस्तथा नासान्तिको विशः ॥
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः । अनुद्वेगकरा
नृणां सत्वचो नाग्निदूषिताः ॥ नाङ्गुष्ठादधिका कार्या समित्स्थू-
लतया क्वचित् । न सकीटा, त्वचा चैव न वियुक्ता न पा-
टिता (खण्डात्मिका) । प्रादेशान्नाधिका नोना तथा नैव द्विशा-
खिका इति ॥ १४. अभिवादनम्— आमन्त्रिते स्वरोन्त्योऽस्य
प्लुत इति वसिष्ठः । आमन्त्रिते कर्तव्येऽभिवादकनाम्नोऽन्ते
यः स्वरः स प्लवते त्रिमात्रो भवति इत्यर्थः । यत्तु—आत्मनाम
गुरोर्नाम नामातिकृपणस्य च । आयुष्कामो न गृ[illegible]

पुत्रकलत्रयोरित्यादि तदभिवादनव्यतिरिक्तस्थानविषयमिति ॥ एतच्चाभिवादनं हस्तद्वयेन कर्तव्यम् । तत्त्वेकहस्तेन ॥ अभिवादे आशिषमप्रयच्छतो विप्रस्य नरकभोगः । एतच्चाभिवादनमधिकवयसामेव कार्यम् ॥ १५. स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति । उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ एकदेशमुपाध्यायऋत्विग्यज्ञकृदुच्यते । एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ १६. गृहे स्त्रिय एव भिक्षां ददति । अत एव मातरं वा स्वसारं वा इत्युक्तं । मातरमेवाग्रे भिक्षां भिक्षेत । ये चान्ये यावत्यो वा सन्निहितास्तत्र स्युरिति कथनादुपनयने भिक्षा तद्यागदेशागतेभ्य एव, नतु प्रतिगृहं गत्वा भिक्षणीया इति ॥ नायं नियमः 'स्त्रिय एव भिक्षणीया इति,' । अतएवाह शौनकः–अप्रत्याख्यायिनमग्रे भिक्षेत, अप्रत्याख्यायिनीं वेति ॥ १७. आषोडशाद्ब्राह्मणस्य सावित्री नातिरिच्यते । आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥ अवध्यतिक्रमेऽपि संस्कार्या एवैते ॥ अन्धबधिरजडादयोपि संस्कारार्हाः ॥ मूकोन्मत्तौ न संस्कार्यौ इत्येके ॥ एतेषामसंस्कृतत्वेपि पातित्यं नास्ति कर्मस्वनधिकारात् ॥ तदपत्यं तु संस्कार्यमेव, ब्राह्मण्यं तेषां नापगच्छति । ब्राह्मणेनोत्पन्नो ब्राह्मण एवेतिश्रुतिः । असंस्कृतत्वेऽपि जातिमात्रस्यानपायाद् ब्राह्मण एवेति द्विजातिरेवेत्यर्थः ॥ एवं क्षत्रियादिष्वपि ॥ १८. स्त्रीणां तु विवाह एवोपनयनम् । तथाच मनुः–वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ॥ आर्षो विवाहात्पूर्वमुपनयने स्मार्त-

वचनानि तु कल्पान्तराभिप्रायाणि ॥ १९. मेखलोपवीतादीनि विनष्टानि जले प्रास्यान्यानि मंत्रपूर्वकं ग्रहीतव्यानि। मेखलामवमुञ्चते-अधस्तादवतारयति अवशब्दोऽधस्तादर्थे इति ॥ २०. ब्रह्मचारिनियमा मधुमांसाञ्जनोच्छिष्टादिवर्जनम् । २१. कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत्। उत्सवानि च कार्याणि दिग्दिनानि च वर्जयेत् ॥ २२. ओषधे त्रायस्वैनमितिमंत्रेण दर्भपिञ्जलीं केशेषु निदधाति। तत्पूर्वकमेव केशच्छेदः। गोभिलः-अथायसेन प्रच्छिद्यानडुहे गोमये निदधाति (तान्केशान्) अर्थः-अनन्तरं लौहक्षुरेण केशान् दर्भपिञ्जलीसहितान्छित्त्वा ताभिः सह वृषगोमये निदध्यात्॥ गोभिलः- 'अथानडुहे गोमये केशान्कृत्वारण्ये गत्वा निखनन्ति, । स्तम्बे-व्रीहियवादिस्तम्बे पके निदधाति ॥ २३. माणवकोऽनधीतवेदः । ज्ञेयोनूचोमाणवकइत्युक्तेः ॥ अधीहि भोः सावित्रीत्रिजपपूर्वानुपायनव्रतमंत्रान्मे भवाननुब्रवीतु इति लिखितपाठविशेषान्वयसिद्धये अधिपूर्वादिक्स्मरणे इतिधातोः सिद्धस्याधीहीति पदस्य कथनेन गुरोरवधानं ब्रह्मचारी पूर्वं याचते । अधीहि-स्मर अवधेही त्यर्थः। अध्ययनार्थत्वेऽनुब्रवीत्विति द्वितीयं क्रियापदं व्यर्थत्वापन्नं भवेत् आत्मनेपदं च प्रसज्येत। वरो ददामीति-वरो गौः, ॥ यागविषयः—

संवःसृजामीतिमंत्रद्वयमेव पठित्वा प्रणीतपात्रे एकवारं पुष्पार्पणम् । पुनरपि मंत्रद्वयं पठित्वा द्वितीयवारम् । एवं तृतीयवारम् इति॥ ऋत्विक् पुत्रो गुरुर्भ्राता भागिनीयोऽथ विट्पतिः

(जामाता) एभिरेव हुतं यत्स्यात्तद्धुतं स्वयमेव तु ॥ असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना द्वयोरप्यसमक्षं चेद्भवेद्धुतमनर्थकम् ॥ असन्निधौ तु पत्न्याः सदस्यर्गुस्तदनुज्ञया । उत्सवे प्रसवे चर्तौ कुर्वीतानुज्ञया विना ॥ चतुर्दशकुशैर्वापि सप्तभिश्चोपयामकम् । प्रवरसंख्यामात्रेण च्छेदयेच्च विचक्षणः ॥ ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशश्च विष्टरः । तिर्यक्केशमुपयामं ह्यकेशोथ पवित्रकः ॥ गृह्येऽग्नौ लौकिके वापि रात्रौ क्रव्याद आविशेत् । यागे तद्दर्भे प्रागग्रं प्रतीच्यां निर्हरेद्बुधः ॥ दर्भाङ्कुराभ्यां क्रव्यादं दर्भमात्रेण चोल्मुकम् । चरोर्मेक्षणमेकेन चेति शातातपोऽब्रवीत् ॥ काठकान् अग्नेः परिसमूहनादिषु–करमध्ये स्थिता देवाः करपृष्ठे तु राक्षसाः । तस्मात्सर्वप्रयत्नेन करपृष्ठं न दर्शयेत् ॥ परिसमूहनादिभिः प्राङ्मुखोप्यग्निः प्रत्यङ्मुखो भवति । परिसमूहनादिषु क्रमतो ब्रह्मशिवविष्णूनां वासः । तथा एष्वेव सम्मुखीकरणशोधनसन्धारणानि भवन्ति । प्रसादः फलदत्त्वं चाग्नेः । अग्नेरुत्तरतश्चात्र प्रशस्ते होमकर्मणि सम्भारान् स्थापयेत् ॥ नग्नो वैश्वानरो भूत्वा लज्जमानः पराङ्मुखः । कुशवस्त्रं परीधाय विमुखः सम्मुखो भवेत् ॥ वैश्ववर्णीयदर्शने ऋक्सामसंहितायां यज्ञस्येतिचतुर्भिर्मन्त्रैर्दर्भास्तरणम् ॥ काठके लौगाक्षिस्तु–दर्भमुष्टित्रयं कृत्वा त्रिभिर्मन्त्रैश्च मंत्रितम् । प्रतिदिशं च विकिरन्विदिशं परिवर्जयेत् इत्याह ॥ होमे विघ्नकरा यत्ता अन्नादिबलहारिणः । तदर्थमुपयामं तु यार्यं सृजेत राक्षसम् ॥ मूलमध्याग्रभागेषु ह्युपयामस्य सर्वतः ।

ब्रह्माद्या देवताः सर्वा वसन्ति त्रिदशेश्वराः ॥ उपयामेन रहितं हव्यं कव्यं तु निष्फलम् । तस्मात्सर्वप्रयत्नेन धारयेदुपयामकम् ॥ उपयामस्थितांश्छिन्द्याद्दर्भाग्रांश्चतुरो मखे । ऋग्वेदकर्मणि रत,स्ततोऽर्धं च तथापरः (यजुर्वेदी) । सामवेदरतश्चैकं दर्भाग्रमितिनिश्चयः । अथर्वणि समासक्तो व्यवस्थां कुरुते सदा ॥ खण्डेनास्त्रेण वै देवो दानवान्गिरिशोऽहरत् । अतोऽसौ खण्डपरशुः स्मृतो मुनिभिरीश्वरः ॥ तद्दृष्ट्वा खण्डरूपं च भवन्ति भयविह्वलाः । राक्षसा दानवाश्चैव तेऽपि नानायुधाः सदा ॥ अथाग्रच्छेदनमृगथर्ववेदयोः— 'खण्डेन खण्डपरशो विद्विषो विमृधो जहि, ॥ प्रथममिन्धनाहारो देवानां पुष्टिवर्धनः । चरुराज्यं च समिधो यवाश्च तिलतण्डुलाः ॥ षडङ्गैरेव होतव्यं सर्वकामफलप्रदैः । प्रजाश्च चरुणा तेजश्चाज्येन वर्धते सदा ॥ समिधः शत्रुनाशाय यवाश्च मित्रवर्धनाः । तिलतण्डुलहोमेन व्याधिदुर्भिक्षनाशनम् ॥ श्रीफलैरर्थसिद्धिः स्यात्पूगाद्यैश्च महास्थितिः । अक्षोटैः सुतसौभाग्यं जातीफलं च व्याधिहृत् । ख्यातिश्च पद्मबीजेन सर्वौषध्यो ज्वरापहाः ॥ आज्यसमास्तिलाः प्रोक्ता द्विगुणाश्चैव तण्डुलाः त्रिगुणाश्च यवाः प्रोक्तास्तदेवं तिलतण्डुलाः ॥ आज्यं तेजःसमुद्दिष्टमाज्यं पापहरं परम् । आज्यं सुराणामाहार आज्ये सर्वं प्रतिष्ठितम् ॥ अग्निना चैव मंत्रेण पवित्रेण च चक्षुषा । चतुर्भिरेव यत्पूतं तदाज्यमितरद् घृतम् ॥ घृतमेकगुणं प्रोक्तमाज्यस्थाल्यां दशाधिकम् । आज्यं शतगुणं प्रोक्तं स्रुवे चैव सहस्रकम् ॥ स्रुचि लक्षगुणं प्राहुः

स्रुवाग्रे दशलक्षकम्। स्वाहाकारे तु कोटिः स्यादग्नौ प्राप्ते ह्यनन्तकम् ॥ दिव्यान्तरिक्षभौमादेरागतं तु भयं हि यत्। तत्सर्वमाज्यसन्दर्शात्प्रणाशमुपगच्छति ॥ वेदाक्षरेण मन्त्रेण यजमानः सपत्निकः । सानन्दं दर्शयेच्छीर्षं पुत्रपौत्रजयावहम् ॥ स्वमात्मानं घृते पश्येद्यदीच्छेच्छुभमात्मनः । तिलतण्डुलसौवर्णरौप्यताम्रयवादिभिः । आज्यदर्शनसंस्कारं कारयेद्विधिना द्विजम् ॥ वीक्षणमंत्रः—अलक्ष्मीर्यच्च दौस्थ्यं मे सर्वगात्रेष्ववस्थितम्। तत्सर्वं शमयाज्य त्वं लक्ष्मीं पुष्टिं च वर्धय ॥ स्वाकारे च वसेद्ब्रह्मा हाकारे हरिशंकरौ । त्रयाणां संगमस्तत्र स्वाहेति यत्र हूयते ॥ स्वाकारचतुरंशे तु हाकारप्रथमांशके। उभयोः संगमो यत्र त्वाहुतिं तत्र दापयेत् ॥ हव्यवाड् सलिलं दृष्ट्वा भीतः प्रत्यङ्मुखो भवेत् । तदर्थं च समुह्यापि पर्युक्ष्य परिषिञ्चनम् ॥ अग्निं परिसमूहेत प्राग्यास्यां प्रत्यगेव तु । तेनैव तु परीत्योदक् करपृष्ठमदर्शयन्॥ पूर्वापरावुदगग्रौ प्रागग्रौ दक्षिणोत्तरौ । चातुष्कोष्ठा स्तरा ज्ञेयाः पित्र्ये दक्षिणपश्चिमौ॥ पूर्वतः पूर्वमास्तीर्य दर्भैः प्रागग्रसम्मितैः। दक्षिणां तु द्वितीयेन तेनैवागत्य चोत्तराम्। पश्चिमां तु तृतीयेन यजेच्चोदक्समापनैः-आदौ पंचेत्यत्र । दशप्राणसमायुक्तं पंचतत्त्वं समानसम् । शरीरं षोडशाधारं तस्मात् षोडश वै स्तराः॥ निर्वापात्प्रोक्षणाच्चैव ह्यवासान्मेक्षणात्तथा । चातुर्विध्यात्तु यत्पूतं स्थालीपाकं तदुच्यते ॥ रक्षार्थं यजमानस्य याजकस्य विशेषतः। अपयन्त्वसुराश्चेति मक्षणमभिधीयते॥ अग्नौ निषि-

द्भमामाज्ञं तस्मात्सक्तून् द्विजोत्तमः। जुहुयात्पत्तयागाग्नौ चन्द्रसूर्यग्रहे सदा ॥ आज्यं वामकरे कृत्वा जुहुयाद्दक्षिणेन यः। सर्वं तन्निष्फलं तत्र ह्यर्घं गृह्णन्ति राक्षसाः ॥ सर्वेषामेव होमानां द्वे द्वे रन्ध्रे प्रपूरयेत् । इडाभागे तु विधिवद्घोरन्ध्रं प्रपूरयेत् ॥ होमान्ते तिलकं कार्यं स्रुक्पृष्ठात्तु सदा बुधैः। स्रुक्मुखान्नैव कर्तव्यं कुर्वन्नरकमाप्नुयात् ॥ ऐशान्यामाहरेद्भस्म स्रुचा वाथ स्रुवेण वा । वन्दनां कारयेत्तेन शिरःकण्ठांसकद्वये ॥ कश्यपस्येति मंत्रेण यथानुक्रमयोगतः ॥ केचिद्ब्रह्मचारिण एवाग्निकार्ये इत्थं भस्मग्रहणमाहुः । अन्येषां तु ललाट एव ॥ तद्यथा- मानस्तोकेति मंत्रः। त्र्यायुषं जमदग्नेरितिललाटे । कश्यपस्यत्र्यायुषमिति कंठे । यद्देवानांत्र्या० इतिदक्षिणांसे । तन्मे अस्तु त्र्या० इतिवामस्कन्धे ॥ यदि कर्ममध्ये कदाचिदग्निशमनं भविष्यति तत्राह लौगाक्षिः–पृथगग्निं समानीय क्रव्यादं निर्हरेद् बुधः । शोधयित्वा च मन्त्रैस्तु मेलयेदग्निमग्निना ॥ मंत्राः–आपोहिष्ठा० ३। हिरण्यवर्णाः० ४। शन्न आपो धन्वन्याः० । आपो अस्मान्मातरः० । हिरण्यवर्णाः शुचयः पावका विचक्रमुः० ॥ सूत्रं चतुर्गुणं कृत्वा यजमानस्य वेष्टयेत् । रक्षार्थं कंकणं प्राहुर्ब्रह्मग्रन्थिसमन्वितम् ॥ ग्रहा नागा भूतयक्षराक्षसाः किन्नरोरगाः । तेऽपि सर्वे पलायन्ते पाणौ कंकणबन्धनात् ॥ कंकणं तिलकस्याङ्गं बध्नीयान्मणिबन्धके । सायंकाले तु संप्राप्ते तेन साकं विसर्जयेत् ॥ (रात्रियागकंकणस्य तु प्रातः काले त्यागः) ॥ आवसथ्यो गृह्याग्निः ।

पारस्करः- आवसथ्याधानं दारकाले वा दायाद्यकाले एके-षामिति॥ व्यासोपि-अग्निर्वैवाहिको येन न गृहीतः प्रमादिना। पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः॥ एतच्च ज्येष्ठस्याधिका-रिणो द्रष्टव्यम्। ज्येष्ठे विद्यमाने नाधिकारः कनीयसाम् अ-विभक्तानाम्॥ ज्येष्ठानुज्ञया कनीयसामप्यधिकारः इति सुम-न्तुः शंखो वृद्धवसिष्ठोपि॥ होमद्रव्याणि-दध्ना तण्डुलैरक्षतैः (यवैः) वा यजेत॥ तण्डुलशब्दो व्रीह्युपलक्षणार्थः। अत एव श्रुतौ-व्रीहिभिर्यजेत यवैर्यजेतेति॥ आहुतिपरिमाणम्- व्रीही-णां च यवानां च शतमाहुतिरिष्यते (व्रीहिवत् तण्डुलाश्रपि) यद्वा धान्यं चतुःषष्टिराहुतौ परिकीर्तितम्। तिलानां तु तद-र्धं स्यात्तदर्धं स्याद्घृतस्य तु॥ अग्निधमने विशेषः-कात्यायनः जुहूषंश्च हुते चैव पाणिना शूर्पदारुभिः। न कुर्यादग्निधमनं नचापि व्यजनादिना। मुखेनैव धमेदग्निं मुखादग्निरजायतेति॥ नाग्निमुखेनेति वचो लौकिके योजयेत तत्॥ आवसथ्यस्य गृह्यस्याग्नेराधानमावसथ्याधानम्। वैवाहिकोग्निरेवौपासना-ग्निरावसथ्याग्निरित्याश्वलायनादीनां पक्षः। बौधायनः-आसा-यंकर्मणः प्रातराप्रातः सायकर्मणः। आहुतिर्नातिपद्येतापार्व-णं पार्वणान्तरात्॥ मैत्रायणीयपरिशिष्टे-ऋषयो ह स्म प्रा-यायुकाः (यायावराः)। स आमयावी आर्तो वा अर्धमा-सायाग्निहोत्रं जुहुयात्पक्षादौ पर्वणोन्ते सायं च प्रातरेव च चतुर्दश चतुर्गृहीतानि। अत्र च पक्षान्ते त्रयोदश पञ्चदश वा आगामिदिनपरिगणनेन स्वशाखोक्तप्रकारेण सकृदेव होमः

कर्तव्यः इति अपरार्के ॥ अथच- अत्रैवापरार्के-'दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः । आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्, अस्यार्थः-यया सहाग्न्याधानं, तामुक्तां वृत्तवतीं मृतां पतिर्वैतानैरग्निभिर्यथाविधि दाहयित्वाऽसवर्णभार्यश्चेद्विधिवद्दारानाहरेत् । अग्नींश्चैवाविलम्बयन् । तत्र सवर्णदारालाभे शूद्रावर्जमसवर्णयापि सहाधानादि कार्यम् ॥ विष्णुः- 'मृतायामपि भार्यायां वैदिकाग्निं नहि त्यजेत् । उपाधिनापि तत्कर्म यावज्जीवं समापयेत्, । अस्यार्थः वैदिकैरग्निभिर्मृतां पत्नीं संस्कृत्य न तानग्नीन्परिवर्जयेत् पुनरादधीत । सवर्णदाराऽलाभविषये तूपाधिनापि-असवर्णयापि भार्यया यावज्जीवं कर्म समापयेत् इति ॥ न पुनरयमर्थो-मृतायामपि भार्यायां वैदिकोग्निर्न त्याज्यः, न तेन तां दहेदिति । यतस्तथा सति 'शवाग्नयो वा एते भवन्ति, ये मृतायां भार्यायां भ्रियन्ते इति काठकश्रुतिविरोधो दुष्परिहरः॥ तथोपाधिनापि तत्कर्मेत्यस्य कुशमय्या काञ्चनमय्या वा कर्मसमाप्तिः कार्या इति नार्थः। पत्न्या अप्रतिनिधेयत्वात् ॥ न स्वामित्वस्य, भार्यायाः इत्यादिसत्याषाढोक्तेः॥ पत्न्याः क्रत्वर्थकर्मकारिरूपं कार्यं, तद्यद्यपि शक्यं प्रतिनिधातुं, तथापि कुशादिमय्याः प्रतिकृतेस्तत्कार्यकारित्वाभावान्न तत्प्रतिनिधित्वम् ॥ नहि समीपस्थितिमात्रं पत्नीकार्यम्. किंतु फलीकरणाज्यावेक्षणादि तत्कार्यम् । तदाक्षिप्ता च समीपस्थितिः । तेन पूर्वोक्त एवास्यार्थो न्यायः ॥ यत्पुनः— 'अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासी-

रन्यावज्जीवमतन्द्रिताः, इति वचनं तदग्निहोत्रस्तुत्यर्थमेव उ-क्ताद्वेतोः ॥ यत्तु बह्वृचब्राह्मणं 'तस्मादपत्नीकोऽग्निमाहरेदिति, तदयुक्तं, सर्वाः खलु श्रुतयः सपत्नीकस्याग्निहोत्रादि विदध-ति । बह्वृचब्राह्मणं तु स्तुतिपरत्वेनाप्युपपद्यते । किंच रज-स्वलायां सूतिकायां च पत्न्यामेतद्वचनमपत्नीकोऽग्निमाहरेदिति न पुनरविद्यमानायां भार्यायाम् । एवं च सति न श्रुत्यन्तर-विरोधेनास्य वाक्यस्य विधायकत्वम् । तस्मात् श्रुतिविरोधा-भावादाहरेद्विधिवद्दारानितिस्मृतिवचनं प्रमाणमेव ॥ (अथवा साग्निकस्य पित्रोः श्राद्धे कुशमयीपत्नीसन्निधानेनाग्न्याधाने बह्वृचब्राह्मणं तस्मादित्यादिकं सार्थकम्) ॥ अग्निवर्णकपाले करीषादिनोत्पादितः कपालाग्निः । लौकिकाग्निश्चान्त्यजाग्निप-तिताग्निसूतिकाग्निचिताग्निश्चमेध्याग्निभिन्नो ग्राह्यः ॥ उत्तपना-ग्निः—दर्भाग्रैर्ग्निं तु प्रज्वाल्य* पुनर्दर्भैस्तृतीयोऽग्निरेष उत्तपनः स्मृ-तः ॥ आहिताग्न्योश्च दम्पत्योर्यस्त्वादौ म्रियते भुवि । तस्य देहः सपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः ॥ पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना । अनाहिताग्निदेहस्तु दाह्यो गृह्याग्निना द्विजैः ॥ सिन्धुमते इदं तत्त्वम्—साग्नेः पत्नीमृतौ द्वौ पक्षौ । पुनर्विवाहेच्छायां पूर्वाग्निभिर्दहेदित्येकः पक्षः । भार्यायै पूर्व-मारिण्यै दत्त्वाग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात्पुनराधा-नमेवचेतिमनूक्तेः, दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः । आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्, इतियाज्ञवल्क्योक्तेश्च ॥ पुनर्विवाहाशक्तौ निर्मन्थ्येन (अरणिजेन) तां दग्ध्वा पूर्वाग्नि-



---

* पुनर्दर्भैस्तु संयुतः ।

ष्वेवाग्निहोत्रेष्ट्यादि कार्यमित्यर्थः ॥ आहार्येणाहितान्ग्नि पत्नीं चेत्याश्वलायनोक्तेः । भारद्वाजोपि निर्मथ्येन पत्नीमिति । पूर्वाग्न्येकशेषेण दहेदिति यज्ञपार्श्वदेवयाज्ञिकादयः (काश्मीरेतु नायमाचारः) ॥ यानि च— "तस्मादपत्नीकोप्यग्निमाहरेदिति श्रुतिः । विष्णुः छन्दोगपरिशिष्टं च- मृतायामपि भार्यायां लौकिकाग्नि नहि त्यजेत् । उपाधिनापि तत्कर्म यावज्जीवं समाचरेत्-उपाधिर्हैमकुशपत्न्यादिः ॥ अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः इत्यपरार्के । कात्यायनोपि-रामोपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् । ईजे बहुविधैर्यज्ञैः सह भ्रातृभिरच्युतः ,, इत्यादीनि, तानि पूर्वाग्निष्वेवाग्निहोत्रपराणि, नत्वपत्नीकस्याधानार्थानि, क्रतुविधीनामाधानाप्रयोजकत्वात् । अपत्नीकस्याधानाप्रवृत्तिरिति मानवपरिशिष्टाच्च ॥ दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयमित्यापस्तम्बसूत्रं तु पुनर्विवाहाशक्तौ पूर्वकृतमग्न्याधेयमात्मार्थमेव स्थाप्यं । न पत्न्यै दद्यादित्येवंपरम् ॥ ब्राह्मणभाष्यापरार्काशार्करामाण्डारादिमतमप्येवमेव ॥ (नायमत्राचारः) ये त्वपत्नीकस्याधानमाहुस्तदाशयं न विद्मः ॥

[यहां पर भाषामें इसका भावार्थ लिखना मैं उचित समझता हूं । कि- जिस ब्राह्मणको विवाह होचुका हो, पत्नी भी विद्यमान हो, गृहपतित्व भी प्राप्त हुवा हो, वही पच यागाग्निके धारणकरने का अधिकारी बनजाता है ॥ यदि अग्निधारण करके उसकी पत्नी कालान्तरमें पतिसे पहिले

मरजावे, तो उसकी अन्त्येष्टि उसी अग्निमें किई जाती है। तथा साथ ही वह अग्नि समाप्त होजाता है। अनन्तर उ-सका पति तब तक पुनः अग्निधारण करनेका अधिकारी नहीं बन सकता है, जब तक कि फिर सवर्णापत्नीका ग्र-हण न करे। माता पिता के श्राद्धकाल में आवश्यक अग्न्या-धान तो कुशादिमयी पत्नीकी सन्निधिसे हो सकता है। पञ्चयागका धारण करना तो पत्नीके अभावपर सर्वथा श्रु-तिस्मृतिविरुद्ध है ॥] पर्यग्नीकरणं अग्निज्वालास्पर्शः ॥ शुद्धं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद् बुधः । ताम्रपात्रमप्याह देवीपुराणम्- अग्निरपि-पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे। अग्निप्रणयनं कुर्यात् इति ॥ प्रणीय स्थापयित्वा ॥ चरु-विधौ गोभिलः-उलूखलं मुसलं च प्रक्षाल्य शूर्पञ्च पश्चादग्नेः प्रागग्रान्कुशानास्तीर्य उपसादयति स्थापयति। व्रीहीन्यवान्वो-पसाद्यावहन्तुमवघातं विधातुमुपक्रमते । त्रिः सुफलीकृतान् तण्डुलान् त्रिः देवताभ्यः प्रक्षालयेत्, द्विर्मनुष्येभ्यः, सकृत् पितृभ्यश्च । पवित्रान्तर्हितान् तण्डुलानावपेत् । कुशलश्रृत-मिव स्थालीपाकं श्रपयेत् । प्रदक्षिणमुदायुवन् श्रृतमभि-घार्य उदगुद्वास्य प्रत्यभिघारयेत् ,, ॥ अस्यार्थः पवित्रमन्त-र्हितं व्यवहितं येषां तान् । चरुस्थाल्यामुत्तराग्रं पवित्रं नि-क्षिप्य तण्डुलान्निक्षिपेत् । कुशलेन पाकनिपुणेन श्रृतं, यथा न दग्धं नातिक्लिन्नं न मन्दपक्वं तथा स्थालीपाकं श्रपयेत् ॥

अत एव छन्दोगपरिशिष्टे स्थालीपाकं प्रति ... हृदयो...

कठिनः शुभः । नचातिशिथिलोऽपक्को नच वीतरसो भवेत् ॥
वीतरसो गालितमण्डः ॥ उदायुवन् दक्षिणावर्तं यथा स्यात्तथा
मेक्षणेनोर्ध्वमीषन्मिश्रयन् । उदगुद्वास्य अग्नेरुत्तरस्यामुत्तार्य,
प्रत्यभिघारयेत् पुनर्घृतेन तथा सेचयेत् । क्वचिदूर्ध्वमवद्योत-
नमपि ज्वलदङ्गारेणाह छन्दोगपरिशिष्टम्-अधिश्रितमवद्योत्य
सुश्रृतं चाभिघारयेत् घृतेन सेचयेत् पश्चात्पुनरेवाभिघारयेत् ॥
अग्निमुपसमाधाय-प्रज्वाल्य ॥ गोभिलः-अथेध्मान् कल्पयेत्
खादिरान्पालाशान्वेति छन्दोगपरिशिष्टम् । प्रादेशद्वयमिध्मस्य
प्रमाणं परिकीर्तितम् । अग्न्याधाने उल्मुकीकरणादौ चास्यो-
पयोगः ॥ पवित्रमन्तराकृत्वा स्थाल्यामाज्यं समावपेत् । आज्यं
संयूय मक्षिकादि अपनीय संशोध्य ॥ उत्पुनाति ऊर्ध्वं शोधये-
त् । गोभिलः-'अथैने अग्निरभ्युदयाम्नावप्युत्सृजेत्, इति । अ-
पिरेवार्थे । एने पवित्रे सव्येन गृहीत्वा दक्षिणेनाभ्युत्य । 'अ-
थैतदाज्यमधिश्रित्योदगुद्वासयेत्, आज्यं तद् घृतपात्रं अधि-
श्रित्य अग्नेरुपरि कृत्वोत्तरत उद्वासयेत् अवतारयेत् ॥ अत्र
गर्भपात्रस्य गर्भिण्याः संस्कारवत् सकृत् संस्कृताज्यपात्रे यानि
निक्षिप्यन्ते तेषां संस्कारान्तरो नास्ति इत्याह गृह्यासंग्रहः ॥
खादिरो वाथ पालाशो द्विवितस्तिः स्रुवः स्मृतः । स्रुग् बा-
हुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः । प्रगृह्यन्तेऽस्मिन्निति प्र-
ग्रहो दण्डः । सच वर्तुलः ॥ तेषां प्राक्शः कुशैः कार्यः सं-
प्रमार्गो जुहूषता । प्रतापनं च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥
स्रुवं—पश्चाङ्गुलान्बाह्यस्त्यक्त्वा मध्ये त्वंसमदृया ॥ पाण्याङ्गु-

तिर्द्वादशपर्वपूरिका स्रुवादिना चेत्स्रुवमात्रपूरिका । दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तप्तपावके ॥ योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः । मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥ तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन । आरोग्यमिच्छतामायुः श्रियमात्यन्तिकीं तथा ॥ परिसमुह्य-विक्षिप्तावयवानेकीकृत्य पर्युक्षन्-तज्जलेन स्पर्शयन् ॥ मंत्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ॥ स्वाहावसाने जुहुयात् ध्यायन्वै मंत्रदेवताम् ॥ (जपहोमे) नमोन्ते न नमो दद्यात् स्वाहान्ते द्विठमेव च । पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः ॥ द्विठः-स्वाहा इत्यागमविदः ॥ स्वाहान्तमन्त्रे स्वाहान्तरं नास्तीति सरला ॥ स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदुपस्तीर्णम् ॥ यद्धविरपूपादिकं गृहीत्वानन्तरमाज्यं दीयते तदभिघारितम् ॥ अनुप्रहरेत्-अग्नौक्षिपेत् ॥ कर्मवैगुण्यसमाधानार्थं प्रायश्चित्तं महाव्याहृतिभिश्चतसृभिर्होमः, अनाज्ञातं यदज्ञातमितिमंत्रेणाहुतिः, अथवा प्रजापतयेस्वाहेति त्रिधा प्रायश्चित्तम् ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि, तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ अवधारणम्- अच्छिद्रं सम्पूर्णमस्तु इति ब्राह्मणाशीर्वाक्यम् । 'अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समम् ॥ एकः



कर्मनियुक्तः स्याद् द्वितीयस्तत्रतारकः । तृतीयः प्रश्नकं ब्रू-

याच्चतः कर्म समाचरेत् ॥ तंत्रतारकः पुस्तकधारकः । प्रश्नवक्ता सदस्यः । कर्मनियुक्तः आचार्यः । ब्रह्माङ्कके होमकर्मणि ब्रह्मा । स सर्वविद्भवति ॥ तेषामाचार्यादीनां कर्मणि होमारम्भात्पूर्वं यजमानेन स्वयं वरणं कार्यम् ॥ वरणं तु गन्धादिपूजाद्वारा प्रीतिमुत्पाद्य कर्म कर्तुं कारयितुं वा प्रेरणम् ॥

## जपमालादिनिरूपणम् ॥

अङ्गुष्ठेन जपेन्मोक्षे तर्जन्या चाभिचारके । मध्यमा धनसम्पत्त्यै शान्त्यै पुष्ट्यायनामिका ॥ (माल्यं) सौवर्णं राजतं वापि स्फाटिकं रत्नजं तथा । कुशग्रन्थि च रुद्राक्षमुत्तरोत्तरमुत्तमम् ॥ अक्षुण्णा समरन्ध्रा च परिपूर्णा दृढा नवा । निखिला ग्रथिता ऽव्यङ्गा चान्योन्यं घृष्टिवर्जिता । (अतएव सूत्रे मध्यतो ब्रह्मग्रन्थिः) सशब्दा चञ्चला यातु त्रुटिता ग्रथिता तु या । भिन्नसूत्रेण ग्रथिता पाषण्डस्य पुरातनी । पाषण्डसम्बन्धिनीत्यर्थः । माला दुःखप्रदायिन्यो ग्रथिता निन्द्यतंतुभिः ॥ अष्टोत्तरशतं कुर्याच्चतुः पंचाशिकाथवा । सप्तविंशतिका कार्या ततो नैवाधमा हिता ॥ उच्छिष्टो वा विकर्मस्थः संलिप्तः सर्वपातकैः । नासौ लिप्यति पापेन रुद्राक्षस्य तु धारणात् ॥ लक्षं तु स्पर्शने पुण्यं कोटिर्भवति चालनात् । दशकोटिसहस्राणि धारणाल्लभते फलम् ॥ लक्षकोटिसहस्रस्य लक्षकोटिशतस्य च । जपे तु लभते पुण्यं नात्र कार्या विचारणा ॥ वक्त्रं वक्त्रेण संयोज्य पुच्छं पुच्छेन योजयेत् । मेरुरूर्ध्वमुखः कार्यः प्रत्येकं नागपाशकम् । पश्चात्तेन जपं कुर्याद्भवदुष्कलं प्रिये ॥

एकैकं मणिमङ्गुष्ठेनाकर्षन्प्रजपेन्मनुम् । मेरौ तु लङ्घिते देवि न मन्त्रफलभाग्भवेत् ॥ प्रमादात्पतिते सूत्रे जपेदष्टोत्तरं शतम् । पादयोः पतिते तस्मिन्प्रक्षाल्य द्विगुणं जपेत् ॥ (एतच्च गायत्रीजपातिरिक्तजपे ज्ञेयम् ॥ रुद्राणां शतमेकं तु भैरवाष्टकसंयुतम् । कृत्वा मेरुं महारुद्रं जपमाला प्रकीर्तिता ॥ स्वदेहं कीर्तितं सद्भिः षण्णवत्यङ्गुलीमितम् । इत्थं बहिश्चरन् ज्ञेयः प्राणोऽपि द्वादशाङ्गुलः ॥ अथवा— चतुर्विंशतितत्त्वानि नाड्यो द्वासप्ततिस्तथा । द्वादशाङ्गुल उच्छ्वासो जपमाला निगद्यते ॥ मालया सह वस्त्रेणाच्छादितदक्षिणपाणिर्जपेत् ॥ मूकः सुप्तो मृतो नग्नो वीर्यहीनो वृथा हतः । भुजङ्गः कीलितः शून्य इदङ्कमंत्रो वृथा भवेत् ॥ न्यासं विना भवेन्मूकः सुप्तः स्यादासनं विना । शिरोहीनो मृतः प्रोक्तो नग्नस्तु पल्लवं विना । वीर्यहीनोऽधिकार्णः स्याद्वृथा मन्त्रो गुरुं विना । हतो दुष्टाय यो दत्तस्तस्माद् दुष्टं विवर्जयेत् ॥ ऋषिदैवतच्छन्दोभिः परित्यक्तो भुजङ्गमः । अन्तरं यस्य बीजैर्न व्याप्तं कीलितमुच्यते । जपं यस्य शृणोत्यन्यः स मंत्रः शून्य उच्यते । तस्मादेतत्परीक्षेत मंत्राणां फलसिद्धये ॥ मंत्राणां पल्लवो न्यासो मंत्राणां प्रणवः शिरः । शिरःपल्लवसंयुक्तो मंत्रः कामदुघो मतः ॥ स्वाहाकारवषट्कारौ वौषट् वट् वेट् तथैवच । नमः स्वाहेति संप्रोक्तं हूं हूं फट् फट् इति श्रुतिः ॥ इति पल्लवेषु ॥

मालासंस्कारः— ॐ सद्यो जातं प्रपद्यामि० । ॐ वामदेवाय नमः । ज्येष्ठायनमः । एवं श्रेष्ठायनमः । रुद्राय० । कालायनमः ।

कलविकरणाय० बलविकरणाय० बलाय० बलप्रमथनाय० सर्वभूतदमनाय० मनोन्मनायनमः । ॐ अघोरेभ्योथघोरेभ्यो०। ॐ तत्पुरुषाय विद्महे महा०। ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ इति पंच मंत्रा जप्याः। सद्योजातमितिमंत्रेण मालां पञ्चगव्येन प्रोक्ष्य शीतजलेन प्रक्षाल्य, वामदेवेतिमंत्रेण चन्दनेनावघृष्य, अघोरेतिमंत्रेण धूपयित्वा, तत्पुरुषेतिमंत्रेण चन्दनकस्तूर्यादिना लेपयित्वा, ईशान० इतिमंत्रेण शतवारं दशवारं वाभिमंत्र्य, अघोरेतिमंत्रेण मेरुं शतकृत्वोऽभिमंत्रयेत् ॥ ततं एतैरेव पंचभिर्मन्त्रैर्मालां पञ्चोपचारैः पूजयेत् । एवं जपमाला संस्कृता भवति ॥

### सन्ध्याकालप्रदोषकालनिर्णयः ।

सन्धौ भवा सन्ध्या। सन्धिश्च खण्डमार्तण्डमण्डलोपलक्ष्यादिस्तारकोदयान्तः, सच सायं सन्ध्याकालः । सतु दिवारात्रिसम्बन्धिदण्डद्वयरूपः इति बृहत्कोशे ॥ योगियाज्ञवल्क्यः सन्ध्याद्वयकालमाहाहोरात्रसम्बन्धिमुहूर्तात्मकम् ॥ तथाच दक्षः-अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः। साच सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥ धर्मप्रवृत्तौ 'रवेरस्तमयात्पूर्वं घटिकैका यदा भवेत् । सायं सन्ध्यामुपासीतेति ॥ धर्मचिन्तामणौ 'दिनान्ते दण्ड एकश्च रात्रेरादिम एव च । मुहूर्तमेतत्कथितं सन्ध्याख्यं वेदपारगैः ॥ सन्ध्यांशश्चापि कथितस्त्रिंशत्पलक एवचेति । एष एव शिवयोस्ताण्डवकालः ।

दिनान्तनिशयोस्तावत्सार्धं दण्डद्वयं च यत् । तदेव मुनिभिः प्रोक्तं शिवताण्डवमुत्तमम् ॥ * अत्र 'आहाराज्जायते व्याधिर्मूढगर्भश्च मैथुनात् । अलक्ष्मीः स्याच्छयानस्य स्वाध्यायाच्चायुषः क्षयः ॥, व्रतादिष्वावश्यकः प्रदोषः । सच कस्मात्कालादारभ्य कियत्कालं तिष्ठति । अत्रोच्यते । व्रतरत्नाकरादिग्रन्थेषु ब्रह्मोत्तरखण्डे घटिकात्रयमस्तमयात्पूर्वः कालः प्रदोष उक्तः । घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेदिति । ततः पूजादि । अत्र पूर्वमितिकथनात् क्त्वान्तप्रयोगाच्च स्नानं दिनान्ते घटीत्रयात्पूर्वमेव । दिनान्तकालिके प्रदोषात्मके घटीत्रयेऽस्मिन् तदुत्तरकाले च वक्ष्यमाणे पूजादिकम् । सन्ध्याकालश्चोपरि दर्शितः । तेन सन्ध्याकाले एव तत्साहित्येनैव प्रदोषकालस्यारम्भः 'सायं सन्ध्यायामारभ्य अस्तादुपरि भास्वतः । प्रदोषस्त्रिमुहूर्तः स्याद्रवावस्तंगते ततः इति धर्मसिन्ध्वादिषु दर्शनात् । 'प्रदोषस्त्रिमुहूर्तस्स्याद्रवावस्तंगते सति; इति तु प्रदोषलक्षणान्तिमावधिर्दर्शितः । इहत्यप्राचीनपण्डितानां चात्र तथैवाचरणम् ॥ प्रदोषव्यापिनि नक्तव्रते च सन्ध्यासाहित्यमेव प्रदोषस्य स्पष्टं ज्ञापितम् । यथा 'मुहूर्तोनं दिनं नक्तमिति, आत्मनो द्विगुणां छायामित्यादि, कुर्याच्चत्सदिवाकरम् । सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये इत्यादि च ॥ अन्तिमोऽवधिश्चास्य प्रदोषस्यानेकविधः शास्त्रेषु दृश्यते । तद्यथा—प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमिष्यते इति वत्सः । प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमुच्यते इति हेमाद्रौ विश्वादर्शौ ।



* सूर्योदयात्पूर्वं द्वे घटिके प्रातःसंध्याकाल इति नागदेवः ॥

प्रदोषस्त्रिमुहूर्तः स्याद्रवावस्तं गते सति इति केचित् । केचित्तु हरणानिर्णये धर्मचिन्तामणौ रात्रिप्रथमयामावधिकत्वं प्रदोषस्य कुर्वन्ति । एवं सति सायंसन्ध्यारम्भकालकस्तत्संपृक्तानन्तरमाविरात्रिघटीद्वयाद्यन्तावधिकश्च प्रदोष इत्यत्र व्यवस्थानिर्णयः ॥ अत्र सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वत इत्यपि सायं सन्ध्याकालस्यान्तिमोऽवधिः । आदिमोऽवधिश्चोपरि दर्शितः इत्यपि ज्ञेयम् ॥ प्रातः सन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि सादित्यां पश्चिमे सन्ध्यामुपासीत यथाविधि ॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । स यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥ पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीत सम्यगृक्षविभावनात् ॥ अकृतसन्ध्यस्य सूर्योदये सति प्रायश्चित्तं स्मर्यते-आदित्योऽभ्युदियाद्यस्य सन्ध्योपास्तिमकुर्वतः । स्नात्वा प्राणांस्त्रिरायम्य गायत्र्यष्टशतं जपेत् ॥ (गायत्र्याः) अष्टोत्तरशतं जप्त्वा सन्तरेज्जन्मसागरात् ॥ सर्वेषां चैव पापानां सङ्कटे समुपस्थिते । दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं परम् ॥ न गायत्र्या समो मंत्रो न जपो वैदिकात्परः । नान्यो देवो वासुदेवादिति व्यासोऽब्रवीत्स्वयम् ॥

## व्रतादिनिरूपणम् ।

१ श्रीगणेशस्य सङ्कटचतुर्थीव्रतं कृष्णपक्षचतुर्थ्यां चन्द्रोदयव्यापि, चन्द्रोदये भोजनं च ॥ चतुर्थ्याश्चन्द्रोदयो यदि वतीयायामेव स्यात्तदा तृतीयस्यामेवैतद् व्रतम् ॥ यदा तु च-

तुर्थीचन्द्रोदयश्चतुर्थीरात्रावेव स्यात्तदा चतुर्थ्यामेवैतद् व्रतम् ॥ अन्यत्रापि–उभयदिने चन्द्रोदयव्यापित्वे तृतीयायुतैव ग्राह्या। दिनद्वये चन्द्रोदयव्याप्त्यभावे परैव ॥ चतुर्थी तु तृतीयायां महापुण्यफलप्रदा । कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी इति हेमाद्रौ ॥ ब्रह्मवैवर्तेऽपि– चतुर्थीसहिता या तु सा तृतीया फलप्रदा ॥ चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यमिदं व्रतम् । नक्ताहारेणेत्यादि ॥ २ चन्द्रषष्ठ्यामपि चन्द्रोदयव्यापित्वं ग्राह्यम् ॥ यदि पञ्चम्या रात्रावेव षष्ठीचन्द्रोदयस्तदा पञ्चम्यामेवैतत् व्रतम्। यदि तु षष्ठीचन्द्रोदयः षष्ठीरात्रावेव स्यात्तदा षष्ठ्यामेवैतद् व्रतम् ॥ उभयत्र चन्द्रोदयव्यापित्वे पूर्वविद्धैव प्रशस्यते। तदुक्तं–तद्वद्भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे । चन्द्रषष्ठीव्रतं कुर्यात्पूर्वविद्धा प्रशस्यते ॥ ३ चैत्रशुक्लनवम्यां श्रीरामनवमीव्रतं मध्याह्नव्यापि ॥ नवम्या मध्याह्नकालो यद्यष्टमीगतः स्यात्तर्हि अष्टम्यामेवोपवासः। यदि नवमीमध्याह्नो नवम्यामेव तिष्ठति तर्हि नवम्यामेवोपवासः ॥ दिनद्वये मध्याह्नव्याप्तावव्याप्तौ वा परा । अष्टमीविद्धाया निषेधात् । अतः पूर्वेद्युः सकलमध्याह्नव्यापिनीमपि त्यक्त्वा मध्याह्नैकदेशव्यापिन्यपि परैव ग्राह्या ॥ केचित्तु अष्टमीविद्धां मध्याह्नव्यापिनीं पुनर्वसुयुतामपि त्यक्त्वा परेद्युस्त्रिमुहूर्तापि नवमी सर्वैरुपोष्या इत्याहुः॥ श्रीरामजन्मनवमी सम्पूर्णा सकला सदा । खण्डा चेत्परविद्धैव कर्तव्या तु विशेषतः ॥ ४ जन्माष्टमीव्रतनिर्णयः यदा अष्टमी, (सप्तम्याः दिने रात्रौ

वा अर्धरात्रपर्यन्तं सप्तमीविद्धा) स्यात् तदा पूर्वदिने सप्तम्यामेव कैश्चित्पूर्वभागिभिरिदं व्रतमुपवासलक्षणं विधीयते ॥ कैश्चित् परदिने (नवमीविद्धायामष्टम्यामेव) इदं व्रतं क्रियते उत्तरभागिभिः ॥ प्रथमे पूर्वभागिनः चरमे उत्तरभागिन इति हि प्रचारः ॥ तदुदाहरणानि व्यतीतानि प्रदर्श्यन्ते—यदा जन्माष्टमीद्वयं तदैतान्युदाहरणानि ॥

संवत् ४८०२ शुक्रदि ३२ सदि १ शरोप्र ५ अदि ५ द्वयं
सं० ४८०३ शभशे ८ सदि २४ आकुशे ५ अदि २४ द्वयं
सं० ४९४६ वृभप्र ६ सप्र ६ शुकुप्र १३ अशे १७ द्वयं
सं० ४९४७ चंअदि २६ सप्र १० भौभप्र ० अशे १५ द्वयं
सं० ४९५५ शअदि ७ सदि ३१ आभदि १३ अप्र २ द्वयं
सं० ४९३९ आकुदि २० सप्र ५ शरोदि २५ अप्र २ द्वयं

यदा तु सैषा अष्टमी, न पूर्वया सप्तम्या उदयकालादारभ्यार्धरात्रपर्यन्तं विद्धा स्यात्, नाप्युत्तरया नवम्या विद्धा स्यात्, क्षयं गता वा (त्र्यहः) द्वयोस्तिथ्योरेका स्यात् । तदा सर्वैरेव काश्मीरिकैरेकस्मिन्नेव दिने व्रतमुपवासलक्षणं विधीयते ॥ व्यतीतवर्षोदाहरणानि ॥

संवत् ४८१२ भौकुशे १२ सशे १२ बुरोशे ६ अशे १२ एकं
सं० ४८१७ .........त्र्यहः.........शरोप्र १० अशे १ एकं
सं० ४८२५ भौभशे १२ सदि ० त्र्यहः............... एकं

एकस्मिन् वर्षे ४९६४ विक्रमार्के ४९४५ तिथ्यादिविभागो यथा—
बुकदि ११ । अशे १ । बुरोदि १७ । अदि ३ । त्रिस्पृक् ॥

अत्र वादिनो विप्रतिपद्यन्ते स्म तत्काले ॥ प्रथमाष्टम्यामेव पूर्वभागिनामुत्तरभागिनां च व्रतमित्येकः पक्षः । द्वितीयाष्टम्यामेव सर्वेषां व्रतमिति द्वितीयः पक्षः । पूर्वप्रचारस्त उभयत्रोभयेषामिति तृतीयः पक्ष आसीत् ॥ पूर्वोदाहरणानिद्वित्वे

४८१३ आकृशे १२ अशे २ चरोशे ७ अदि २ द्वयं
४८१४ वृभप्र ८ अशे ० शुक्रशे १८ अदि ४ द्वयं
४८७६ भौभदि २० अशे ३ बुक्रदि २७ अदि १ द्वयं

आचारो लोकसंकेतश्च जन्माष्टम्याम्–तद्यथा–यदा सदि अदि तदा सप्तम्यामेवाष्टम्यर्धरात्रवेधात्पूर्वभागिनामुपवासः, अत्र द्वितीयदिने उत्तरभागिभिर्नवमीविद्धाष्टमी उपोष्या इति द्वयम् ॥ यदा सप्र अप्र, तदापि सप्तम्यां अष्टम्यर्धरात्रसत्त्वे उपवासद्वयमेव । अत्र सप्तम्यां अष्टम्यर्धरात्रः, अष्टम्यां तु नवमीवेधो द्रष्टव्यः॥ यदा सशे अशे, तदाष्टम्यर्धरात्रस्य अष्टम्यामेव सत्त्वेऽष्टम्यां एकमेव व्रतम् ॥ यदा च, अशे १ त्रिस्पृक् अदि ३ इत्येवं प्रकारः स्यात तदाप्यष्टमीद्वयं उपवासद्वयं, पूर्वभागिनां प्रथमाष्टम्यामुत्तरभागिनां तु द्वितीयाष्टम्याम इति निष्कर्षः॥ अन्यदपि–एषा जन्माष्टमी द्विविधा शुद्धा विद्धा च । सप्तम्या नवम्या वा न संयुक्ता शुद्धा। संयुक्ता तु विद्धा॥ सच वेधः सूर्योदये अर्धरात्रे वा ॥ सा पुनर्द्विविधा। रोहिणीयुता रोहिणीयोगरहिता च ॥ निशीथव्यापित्वमत्र गृह्यते । निशीथपदार्थः रात्र्यर्धे स्थूलः सूक्ष्मदृष्ट्या तु अष्टमो मुहूर्तो निशीथः।एषैव रोहिणीयोगवती जयन्त्याख्या । अत्र व्रते बुध-

सोमवारयोगः प्रशस्तः ॥ निर्णयसिन्ध्वादिष्वस्य विस्तारः ॥
निशीथयोगः पूर्वेद्युः परेद्युर्वा द्वयोरुत । पूर्वैव प्रथमे पक्षे प-
रैवोत्तरपक्षयोः ॥ दिनद्वयेऽर्धरात्रे तु वर्तते यदिवाष्टमी । पर-
विद्धैव कर्तव्या पूर्वविद्धां विवर्जयेत् ॥ अष्टमीमध्यरात्रं तु यदि
न स्याद्दिनद्वये । पूर्वविद्धां परित्यज्य परविद्धा प्रशस्यते ॥
अन्यच्च-पूर्वविद्धाष्टमी या तु उदये प्रथमे दिने । मुहूर्तेनापि
संयुक्ता सम्पूर्णा साष्टमी भवेत् ॥ अस्यार्थः । सप्तम्यां पूर्व-
दिने सूर्योदये त्रुटिमात्रेणापि विद्धाष्टमी षष्टिघटिकावच्छिन्नापि
न कार्या । किंतु परदिने नवमीविद्धाष्टमी मुहूर्तमात्रापि ग्रा-
ह्या ॥ अथच- तिथिक्षयान्नवम्यामष्टम्या असत्त्वात्सप्तमीवि-
द्धामप्यष्टमीं क्वचिदुपवसन्ति ॥ तदुक्तं निर्णयामृते-उत्तरास्ति-
थयो यत्र क्षयं यान्ति नराधिप । पूर्वविद्धैव कर्तव्या परवि-
द्धापि कुत्रचित् ॥ अत्र योगीश्वरो निशीथमाह-अर्धरात्राद-
धश्चोर्ध्वमेकार्धघटिका यदि । रोहिणी चाष्टमी ग्राह्या उपवा-
सव्रतादिषु ॥ रात्रेर्मध्यमयामयोरन्त्यादिघटीद्वयं निशीथसंज्ञम् ।
तदसम्भवेऽर्धघटिका, तदसम्भवे कला । कला च घटिकाशी-
तितमो भागः ॥ विशेषः अन्यत्रापि द्रष्टव्योऽत्र व्रते ॥ यदा
तु अत्र जन्माष्टम्यां तिथिवृद्ध्या दिनद्वयेप्यर्धरात्रे रोहिणीयो-
गः, तदोत्तरैवोपोष्या ॥ तदुक्तं ब्रह्मवैवर्ते-वर्जनीया प्रयत्नेन
सप्तमीसंयुताष्टमी । सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी ॥
तदुक्तं विष्णुभक्तचन्द्रिकायाम्-उदये चाष्टमी किंचिन्नवमी स-
कलं दिनम् । मुहूर्तेनापि संयुक्ता सम्पूर्णा साष्टमी भवेत् ॥

जन्माष्टमीं पूर्वविद्धां सऋक्षां सकलामपि । विहाय नवमी-विद्धामुपोष्य व्रतमाचरेत् ॥ सकलापि सऋक्षापि बुधवारयु-तापि वा। जन्माष्टमी पूर्वविद्धा न कर्तव्या कदाचन ॥ पुरा देवैर्ऋषिगणैः स्वपदच्युतिशंकया । सप्तमीवेधदोषेण गोपितं चाष्टमीव्रतम् ॥ विना ऋक्षेण कर्तव्या नवमीसंयुताष्टमी । सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी ॥ वेधः सूर्योदये अर्धरात्रे वेति द्विधा ॥ अत्र रात्रौ श्रीकृष्णं देवकीं वसुदेवं यशोदां नन्दं बलभद्रं चण्डिकां रोहिणीयुतं चन्द्रमसं च स-र्वोपचारैः पूजयेत्॥ सपुष्पकुशचन्दनं तोयं शंखेनादाय 'क्षी-रोदार्णवसम्भूत अत्रिनेत्रसमुद्भव । गृहाणार्घ्यं शशाङ्केदं रो-हिण्या सहितो मम ॥ इति चन्द्रोदयेऽर्घ्यं दद्यात्॥ अत्रोप-वासाकरणे महादोषः ॥ ५. शिवचतुर्दशीव्रतनिर्णयः । अत्र सामान्यतो व्रतकरणे काश्मीरिकसङ्केतः॥ प्रदोषमर्धरात्रं च चतुर्दश्यां विचारयेत् । शेषे चैका दिवाचैका प्रविष्टे द्वे प्र-कीर्तिते इति ॥ अत्रैकस्यास्तिथेर्माघीयफाल्गुनीयत्वे मुख्य-गौणवृत्तिभ्यामविरुद्धे॥ अत्रोपवासः प्रधानम् । रात्रौ प्रहर-चतुष्टये शिवपूजा कार्या जागरणं च ॥ संवत्सरप्रदीपे—दु-ग्धेन प्रथमे स्नानं दध्ना चैव द्वितीयके। तृतीये च तथाज्येन चतुर्थे मधुना तथा ॥ माघे रवौ भौमवारे वास्य व्रतस्य स-द्भावेऽतिमाहात्म्यम् ॥ प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द-शी॥ पूर्वं प्रदोषनिर्णयः कृत एव ॥ ईशानसंहितायाम्—माघे कृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः

कोटिसूर्यसमप्रभः ॥ तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ॥ अर्धरात्रपर्यन्तं भवेच्छिवचतुर्दशी । सूर्योदयं समासाद्य सैवोपोष्या सदा बुधैः ॥ दिनद्वयेप्यर्धरात्रं चेन्न स्यात्तदा परैव । दिनद्वयेपि वर्तते चेत्तदा परैव ॥ एकस्योभयव्रतधारिणो यदि हरात्रियागोत्सवः शिवचतुर्दशीव्रतं चैकदैवागच्छेतां । तदा शिवचतुर्दशी द्वितीयदिने विधेया । यागनैवेद्यत्यागे बहुदोषकथनात् ॥ इति धर्मचिन्तामणौ ॥ यागपूजादिने शस्तो नोपवासः कदाचन इति ॥ कामायामर्धरात्रं तु भूताया आपतेद्यदि । प्रदोषव्यापिनी भूता तद्धुपोष्या परेद्यवि ॥ निशीथव्यापिनी कार्या सदा कृष्णचतुर्दशी । फाल्गुनव्यतिरिक्तानां मासानां, नतु यागिनी । (यागत्रयोदशीसम्बद्धा शिवचतुर्दशीत्यर्थः) अर्धरात्रस्य त्रयोदशीगतत्वे चतुर्दश्यामपि प्रदोषाभावे किं विधेयमित्याह– प्रदोषव्यापिनी भूता यदि न स्यात्परेद्यवि । दिवातिथिस्तद्धुपोष्या शुचित्वात्सूर्यसंगतः ॥ अत एव पुराणेपि स्कन्दे वचनमीरितम् । शिवरात्रिव्रतं कुर्यात्सर्वदा वै महानिशि । महाफलप्रदं प्रोक्तं विना यागत्रयोदशीम् ॥ शिवरात्रिव्रतं–चतुर्दश्युपवासः । सर्वदा–सर्वेषु मासेषु ॥ अहोरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः ॥ महानिशा द्वे घटिके रात्रेर्मध्यमयामयोरिति देवलः ॥ तदयं संक्षेपः–यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्दशी तद्दिने व्रतम् ॥ यदा तु पूर्वेद्युर्निशीथव्यापिनी, परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्वेद्यु

व्रतम् । यदातु न पूर्वेद्युर्निशीथव्याप्तिः परदिने प्रदोषव्याप्तिस्तदा परदिने । पारणं तु परदिने-चतुर्दश्यां तदलाभेऽमावास्यायाम् ॥ निर्णयामृतात्-शिवरात्रिचतुर्दशी प्रदोषव्यापिन्येव प्रायेणोपोष्या। एषा शुद्धा विद्धा च । शुद्धात्वेकविधैव सूर्योदयमारभ्य पुनःसूर्योदयपर्यन्तव्यापित्वात् । विद्धा तु षड्विधा। तत्र १ पूर्वदिन एव प्रदोषव्यापिनी न द्वितीये तदा पूर्वैव । २ द्वितीयदिन एव प्रदोषव्यापिनी न प्रथमे तदा परैव । ३ पूर्वदिनेऽधिकप्रदोषव्यापिनी पूर्वैव। ४ द्वितीयदिनेऽधिकप्रदोषव्यापिनी परैव । ५ उभयत्र प्रदोषव्यापिनी परैव। ६ नोभयत्र प्रदोषव्यापिनी पूर्वैवोपोष्या॥ ६. नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैरिति ब्रह्मवैवर्ते॥ स्मृत्यन्तरेऽपि शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता । उपवासादिकार्येषु एष धर्मः सनातनः ॥ इत्यादिवाक्यैः पूर्वविद्धानिषेधाच्च शुक्लाष्टमी नवमीविद्धैवोपोष्येति ॥ कृष्णपक्षाष्टमी तु सामान्यतः पूर्वयुतैव ग्राह्येति ॥ अथचात्रेदृत्यसंकेतः-शुक्लाष्टमीएकादशीअमावस्यापूर्णिमा शुक्लचतुर्दशीव्रतानि स्वदिन एव कर्तव्यानि (दि० प्र० शे० वास्यातिथिः)॥ ७ मौद्गल्यश्च तथा धौम्यो दत्तात्रेयौपमन्यवौ। पालदेवो भारद्वाजः षडेते पूर्वभागिनः-एतत्कुलजातानां 'अं-दि प्रप्र, इति तिथिविभागो यदि स्यात् तदा पक्षयागोऽमावस्यायामेव । अन्येषां तु प्रतिपदि एव ॥ एवमेवैतेषां श्राद्धमपि ॥ ८ आषाढशुक्लषष्ठी स्कन्दषष्ठी । तत्र पञ्चम्यामुपोष्य

षष्ठ्यां स्कन्दं पूजयेत्-आषाढे शुक्लपक्षे तु तिथिः कौमारि-
की स्मृता। कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने इति॥ अत्र
सामान्यतः षष्ठीव्रतोपवासः सप्तमीविद्ध एव प्रशस्य इति उ-
क्तं। परंतु स्मृतिसमुच्चये षष्ठ्यष्टम्यावमावस्या कृष्णपक्षे त्र-
योदशी। एताः परयुताः कार्याः पराः (अन्याः) पूर्वेण सं-
युता इति कथनात्, कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द-
शी एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् इति कथ-
नाच्च, 'अन्यान्यपि पूर्वविद्धाविधायकवाक्यानि स्कन्दषष्ठीवि-
षयत्वेन योजनीयानीति सिद्धान्तः, इत्युक्तेश्च, स्कन्दषष्ठीव्रतं
पूर्वविद्धमेव (पञ्चमीविद्धमेव) इतिनिर्णयामृते॥ धर्मसिन्धौ-
च। षष्ठी स्कन्दव्रते पूर्वविद्धा एव। अन्यव्रतेषु परविद्धैव॥
शुक्लषष्ठ्यां तु सामान्यतः यदा प्र, वा, शे, इति तिथिः स्या-
त् तदा षष्ठ्यामेव व्रतम्। यदि तु 'षदि, इतिस्यात्तदा पं-
चम्यामेव षष्ठीव्रतम्॥ ९ कृष्णपक्षे षष्ठीव्रते चतुर्थीव्रते च
चन्द्रोदयव्याप्तिर्द्रष्टव्या। यदि अत्र पंदि २६ षप्र ४ तदा ष-
ष्ठीव्रतं पंचम्यामेव॥ १० यदि व्रततिथौ द्वित्वं (त्रिस्पृक्) स्या-
त्, तदा द्वितीयदिन एव व्रतम्। जन्मोत्सवोऽपि द्वित्वे द्वि-
तीयदिन एव। श्राद्धतिथिद्वित्वे तु पूर्वदिन एव श्राद्धम्॥
११ भीष्माष्टमी दिवा प्रविष्टे शेषे वा देवव्रतवत् ज्ञातव्या इ-
ति पूर्वसम्प्रदायः॥ यद्दिएयमावसी सदैवामावस्यामेव॥ १२
भाद्रशुक्लचतुर्दश्यामनन्तव्रतं कुर्यात्— साचोदयकालव्यापिनी
ग्राह्या। अस्य व्रतस्य 'पूर्वाह्णे वै देवानां' इति दैविकत्वात्पूर्वा-

ह्ने एव विधानं सिद्धम् ॥ अतश्च स्वल्पायामपि उदयकाल-व्यापिन्यां चतुर्दश्यामुपक्रम्य पूर्णिमाभागेपि पूजादिकं कार्यम् ॥ उदयव्यापिन्यास्तिथेर्दैवकृत्ये संपूर्णत्वविधानम् । तदुक्तं 'उपवासव्रतादीनां घटिकैका यदा भवेत् । उदये सा तिथिर्ज्ञेया विपरीता तु पैतृके, ॥ तथा-उदयन्नेव सविता यां तिथिं प्रतिपद्यते । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥ सुमन्तुः-उदिते दैवतं भानौ पित्र्यं चास्तङ्गते रवौ । द्वित्रिमुहूर्तमह्नो या सा तिथिर्हव्यकव्ययोः ॥ अतश्च पूर्णिमायुक्तायामुदयकालव्यापिन्यां चतुर्दश्यामनन्तव्रतं कार्यमिति सिद्धान्तः ॥ धर्मसिन्धौ- दिनद्वये सूर्योदयव्यापित्वे संपूर्णत्वात्पूर्वैव ॥ अत्र पूर्वाह्णो मुख्यः कर्मकालः। तदभावे मध्याह्नोऽपि । अत्र व्रते चतुर्दशग्रन्थियुतदोरकेऽनन्तपूजनादिविधिः ॥ १३ शुक्लप्रतिपद् व्रतममावस्यायुतमेव कार्यम् । तदुक्तं युग्मवाक्ये-प्रतिपद्प्यमावस्येत्यादि ॥ पैठीनसिनाप्युक्तं-प्रतिपन्नवमी चैव कर्तव्या सम्मुखी तिथिरिति । सम्मुखी-सायाह्नव्यापिनी ॥ धर्मसिन्धौ- शुक्लप्रतिपत् पूजाव्रतादौ अपराह्णव्याप्तिसत्त्वे पूर्वविद्धा ग्राह्या ॥ सायाह्नव्याप्तिसत्त्वेऽपि पूर्वैव इति माधवाचार्याः । १४ पंचमी शुक्लपक्षे कृष्णे च कर्ममात्रे चतुर्थीविद्धा ग्राह्या ॥ १५ व्रतमात्रेऽष्टमी शुक्लपक्षे परा । कृष्णपक्षे पूर्वा ॥ बुधाष्टमी शुक्लपक्षे प्रातःकालमारभ्यापराह्णपर्यन्तं यद्दिने बुधवासरयोगः सा ग्राह्या। यदा यदा सिताष्टम्यां बुधवारो भवेत्कचित् । तदा तदा हि सा ग्राह्या एकभक्ताशिनं नृप ॥

सन्ध्याकाले तथा चैत्रे प्रसुप्ते च जनार्दने। बुधाष्टमी न कर्तव्या हन्ति पुण्यं पुरातनम् ॥ सन्ध्याकालः शिवताण्डवकालः । सच दिनान्तनिशयोः सार्धदण्डद्वयात्मकः। एतत्कालात्परतोपि चेदष्टमी स्यात्तदा व्रतमेतत्कर्तव्यम् यथा अदि २८ इयं वर्ज्या । अग्र ४ अशे० इयं कर्तव्या । अत्र सोमपूजया पातकान्मुक्तिः । बुधवारयुतापि द्वितीया (त्रिस्पृक्) अष्टमी न कार्या ॥ १६ अष्टमवर्षादूर्ध्वमशीतिवर्षपर्यन्तमेकादशीव्रताधिकारः । शक्तस्य तु यावज्जीवम् ॥ अशक्तपतिपुत्राद्युद्देशेन स्त्रीपुत्रभगिनीभ्रात्रादिभिरेकादशीव्रताचरणे क्रतुशतजं पुण्यम् ॥ उपवासदिने श्राद्धप्राप्तौ सर्वान्नावघ्राणं कृत्वा गवादिभ्यो देयम् ॥ आत्मार्थं फलाद्याहारश्च ब्राह्मणेभ्यो दत्त्वा विधेयः। सूतकेऽपि दानादेर्न निषेधः ॥ पूजादिर्ब्राह्मणद्वारा । पारणं द्वादश्युल्लंघने महादोषदम् ॥ अतिसंकटे तु श्राद्धादौ तीर्थजलेन पारणं कार्यम् ॥ प्रमादेनैकादश्युपवासातिक्रमे द्वादशी उपोष्या ॥

१७ हररात्रिनिर्णयः ॥

अस्या अधिकारिणस्त्रिविधाः महाचारा वामाचाराः (पूर्वभागिनः) दक्षिणाचाराश्च (उत्तरभागिनः) वर्तन्ते । अत्र तिथिविशेषेषु प्रायः त्रयोदश्याः प्रदोषोऽर्धरात्रं च दृश्यते । कदाचिद् व्रतैक्यं, कदाचिद्दिनद्वयेऽधिकारिभेदाद् व्रतद्वयम् ॥ कदाचित्तु बहुकालानन्तरं तिथिविशेषः सम्भवति। यथा संवत् ५०१७ । द्वाम्र ४ । ३ । त्रदि २६ । ३२ । राधे १६ । ३० । दिनमानं २७ । दिनमानात् त्रयोदशीतिथिः केवलमष्टा-

विंशतिचषकैर्न्यूना । अत्रैतादृशे तिथिविशेषे त्रयोदश्याः प्रदोषार्धरात्रयोर्द्वादश्यामन्तर्भूतत्वाद्वामाचारमहाचारिभ्यां द्वादश्यामेव हरराञ्युत्सवो विधेयः । दक्षिणाचारिभिस्तु (उत्तरभागिभिः) शास्त्रप्रमाणैस्त्रयोदश्यामेव तत्सूर्योदयव्याप्त्या पवित्रीभूतायां व्रतमिदं सर्वथा विधेयमेतादृशे तिथिविशेषे सन्ध्याकालव्याप्ते ॥ तदुक्तं वामकेश्वरे–यस्यामुदेति वै सूर्यः सा तिथिर्भैरवोत्सवे । दक्षिणाचारनिष्ठानां मुनिभिः कथिता सदेति ॥ अपिच 'एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्रापि तथा, इत्यादिन्यायेन शिवचतुर्दश्युपवासे (अर्धरात्रस्य त्रयोदशीगतत्वे चतुर्दश्यामपि प्रदोषाभावे इत्युभयराहित्ये) यथा सूर्योदयपवित्रायामेव चतुर्दश्यामपि उभयव्रतधारिणस्तदुपवासाद्युपदेशो रह्लकाचार्यसम्मतस्तथात्रापि प्रदोषाद्यभावेपि व्रतमिदं सर्वथा समुचितमेव इति ॥ प्रमाणं तु शिवचतुर्दश्या निर्णये ॥ किंच 'त्रयोदश्यामस्तगोर्को यदा पूर्वा तदेष्यते । एवं यजेदस्तगार्को शिवरात्रित्रयोदशीम् । तस्या अलाभेऽभ्युदितादित्यं पर्व न हापयेत् । कालो निमित्तमत्रैव वेलाङ्गं परिभाषितम्, इत्यत्राप्युदाहरणमेतादृश्येव तिथिरुदितादित्यपर्वग्रहणे । अत्र च त्रयोदश्यर्कास्तालाभस्त्रयोदश्यां । त्रयोदशीतिथिमानस्य दिनमानादूनत्वात् ॥ अतएवात्राभ्युदितादित्यायां त्रयोदश्यामेव प्रदोषार्धरात्ररूपवेलाद्यभावेपि त्रयोदशीतिथिरूपकालस्यैव मुख्यनिमित्तत्वं विज्ञायोत्तरभागिनां व्रतविधानं सर्वथा सर्वशास्त्रसम्मतत्वान्निरवद्यम् ॥ उक्तंच– 'उक्तो योर्वा

काल इत्यादि, । 'अस्मद् गुरवस्तु विशेषरूपा तिथिरिह न वेला· तिचेति, सम्प्रदायप्रदीपिकायाम् ॥ एतदेव स्पष्टीकृतं धर्मचि· न्तामणिकृता काश्मीरिकेण श्रीरत्नकाचार्येण तंत्रान्तरोक्तिभि· स्तंत्रालोककारिणा च ॥ धर्मचिन्तामण्यन्तर्गतहरिहरविनोदे यथा— हरस्रात्रिः शुद्धा, मिश्रा, मिश्रेतिच भेदतस्त्रिविधा । रात्रिन्दिनं त्रयोदशीसत्त्वे शुद्धात्वम् । द्वादश्यानुगता त्रयोदशी मिश्रा । एतयोर्द्वयोः प्रदोषो वा अर्धरात्रं वा उभयं वा स· म्भवतो द्रष्टव्यम् । तृतीयभेदोपि मिश्रेति । तल्लक्षणंतु 'स· न्ध्याद्वये समाश्लिष्टा भास्वता या त्रयोदशी । निशालिङ्गित· भूतेशा सापि मिश्रा मता बुधैः, इति । एषा तु सूर्योदयव्या· पिनी एव दक्षिणाचारिभिरेव ग्राह्या । नत्वत्र प्रदोषार्धरात्रापे· क्षा शास्त्रप्रामाण्यात् ॥ अत्र धर्मचिन्तामणौ हरस्रात्रिनिर्णये प्रदोषो रात्र्यर्धं च नैकविधं दर्शितम् । प्रदोषव्यापिनि नक्त· व्रते ब्रह्मोत्तरखण्डे च प्रदोषो दिनान्तभागेऽपि दर्शितः । स· न्ध्याकालश्चात्रैव पुस्तके पूर्वं निरूपितः । ( शिवताण्डवकालः ) । दिनान्तिमघटिकैका, निशादिमघटिकैका च त्रिंशत्पलात्मकस· न्ध्यांशसहिता सन्ध्या इति ॥ सूर्योदयव्यापित्वे चात्रैतादृशे तिथिविशेषे बहूनि प्रमाणानि ॥ एवंच सति अत्र पूर्वभागि· मिद्वादश्यामुत्तरभागिभिस्त्रयोदश्यां व्रतं विधेयम् ॥ सूर्योद· यव्यापित्वेऽपि निशायामेवैत्पूजादि विधेयम् दक्षिणाचारैः, । निशाव्रतत्वात् ॥ अत्रान्यदपि विचार्यम्— यदि कदाचिद् द्वा· दशीत्रयोदश्योर्द्वयोरपि विषयेऽर्धरात्रं न भवेत् तदा दक्षिणा·

चारवदन्यैरपि प्रदोष एव पूज्यः। यद्यर्धरात्रसंस्पर्शोऽप्युभयत्र च नो भवेत् । प्रदोषव्यापिनी तर्हि पूज्या सर्वैस्त्रयोदशी ॥ यथा 'द्वाशे ६ त्रशे ११ प्र १४, इति तिथिक्रमः स्यात्तदा त्रशे इत्यत्रैव सर्वैर्दत्तिणाचारादिभिरधिकारिभिर्हरराज्ञिका विधेया । द्वादश्यां त्रयोदश्यर्धरात्रस्याभावात् । त्रशे इत्यत्र प्रदोषादेः सम्भवात् ॥ प्रदोषार्धरात्रयोः समानपुण्यत्वात् ॥ इत्यर्धरात्रस्यानुभयत्रसत्त्वे निर्णयः। उभयत्रार्धरात्रसत्त्वे यथा- यदि द्वादश्यर्धरात्रे किंचित्तया त्रयोदश्यर्धरात्रे चोत्कृष्टतयार्धरात्रस्य सत्ता स्यात्तदा त्रयोदश्येव पूजनीया । तथाचोक्तं- 'निशीथं तु स्पृशेत्सा चेद् द्वादश्यां च त्रयोदशी । तदा परदिनं पूज्यं प्रदोषे वार्धरात्रके इति । स्पृशेदिति स्पर्शमात्रं नतु व्याप्तिः । 'पूर्वेद्युर्यदि निशीथस्पर्शः स्यात्तदापि परदिने एवेति, रत्नकाचार्योपि प्रतिज्ञातवान् ॥ अर्धरात्रस्यैकतरसत्त्वे तु- 'निशीथं समतिक्रम्य द्वादश्यां चेत्त्रयोदशी । स्यात्स्वेहनि तदा कुर्यात्कामाया नक्तभोजनम् इति, अतोत्र त्रयोदश्येव यागपूजायै ग्राह्येति ॥ अन्यदप्यत्र विषये विस्पष्टताप्रतिपत्त्यै संप्रदायप्रदीपिकातो न्यासक्रमेण दर्श्यते- आद्वादि। चंत्रदि । भौचंदि । अथवा द्वाप्र त्रप्र चंप्र इत्येवंप्रकारे रविसोमयोस्त्रयोदशी चतुर्दशी चं यथाक्रमं निशीथव्याप्त्या पूज्येति ॥ यदातु आद्वाप्र १५ चंत्रप्र १६ भौचंशे १५ इत्येवंप्रकारेण स्यात् तदा सोमवारे त्रयोदश्यर्धरात्रं स्पृष्ट्वा, भौमवारे किंचिदेवार्धरात्रं स्पृशति वा नवा, तथैव आद्वाप्र १५ चंत्रशे १६ भौचंशे १६

इत्यस्मिन्प्रकारे रविवारे त्रयोदशी सोमवारे चतुर्दशी पूर्वन्या-
येन पूज्यैव ॥ अस्ति चात्र 'दिवसनिशे किल कृत्वेत्यादिना,
सोमवारे चतुर्दश्यर्धरात्रयोगः । रविवारेपि त्रयोदश्यां द्वाद-
श्यर्धरात्रयोगः स्पष्ट एव ॥ एवं आद्याशे १५ त्रशे १४ प्र १४ ।
चंप्र इत्यस्मिन्नपि प्रकारे द्वादश्यर्धरात्रे त्रयोदश्या असत्यपि
योगे त्रयोदश्यर्धरात्रे चतुर्दशीयोगाद्दिवसनिशे इति तंत्रालो-
कनयेन गौणोप्यर्धरात्रयोग आदरणीयः । तदत्रापि रवौ त्र-
योदशी, सोमे चतुर्दशी पूज्येति सिद्धम् ॥ यदा तु द्वादश्यामर्ध-
रात्रे न त्रयोदशी त्रयोदश्यर्धरात्रे न चतुर्दशी तदोत्तरोत्तरैव
पूज्या न पूर्वा पूर्वा । तथाचैतन्न्यासः- आद्याशे ५ । चंत्र-
शे ७ । भौचंशे ८ । अत्र रवौ त्रयोदशी, चन्द्रे चतुर्दशी न
पूज्येति ॥ १८ ज्यैष्ठशुक्लदशम्यां गङ्गावतारः- । इयं दशमी दश-
हरासंज्ञिका । अत्र दश योगा उक्ताः- ज्यैष्ठे मासि सिते पक्षे
दशम्यां बुधहस्तयोः । गरानन्दे व्यतीपाते कन्याचंद्रे वृषे रवौ
इति ॥ गराख्यं करणम् । बुधवारहस्तयोगे आनन्दाख्यो योगः ।
अत्र दशमीव्यतीपातयोर्मुख्यत्वम् । तेन यस्मिन्दिने कतिप-
ययोगवती पूर्वाह्णे लभ्यते तत्र दशहराव्रतं कार्यम् ॥ दिनद्वये
पूर्वाह्णे तत्सत्त्वे यत्र बहूनां योगः सा ग्राह्या ॥ ज्यैष्ठे मलमासे
सति तत्रैव दशहरा कर्तव्या । नतु शुद्धे । "दशहरासु नो-
त्कर्षश्चतुर्ष्वपि युगादिषु, इति हेमाद्रिगतऋष्यशृङ्गोक्तेः ॥

## कतिपयमुहूर्तसंक्षेपः ॥

१ सीमन्तोन्नयनं (दधिमुहूर्त) वाराः- आ, भौ, वृ, । नक्षत्र-

श्र, ह. पुं, मू, ति, मृ । जीव शुक्रास्तादि, वर्ज्यम् ॥
२- जातकर्म-वाराः-चं, बु, बृ, शु । नक्षत्र- चि, मृ, श्रं, रे, रो, ३उ, श्र, ति, ह, श्र, धं, श, पुं, स्वा, । तिथयो वर्ज्याः । ४, ६, १४, पर्वाणि, च [ श्र, चं, श्रं, पूं, संक्रान्ति ] ३-अन्नप्राशनम्- षष्ठे मासे, बालानां, कन्यानां पञ्चमे, शुभवारेषु, रे श्र, श्र, धं, पुं, ति, ह, चि, रो, मृ, ३उ, शुभतिथौ । अमावस्या, रिक्ता, च, वर्ज्या ॥ ४, कर्णवेधः- रे, श्र, ह, श्र, चि, ति, धं, पुं, श्रं, मृ । चं, बु, बृ, शु, वाराः । तिथयः २, १०, ६, ७, १३, ५, ११, ३ । षष्ठे, सप्तमे, अष्टमे, मासि । चैत्र पौष अवम (त्र्यहः) हरिस्वाप ( आषाढशुक्लैकादशीसे कार्तिकशुक्लैकादशीतक ) जन्ममास रिक्ता युग्माब्द जन्मतारादि त्यागना ॥ अथवा जन्मदिनसे १२ १६ वे दिन करना चाहिये ॥ विद्यारम्भः ५— वाराः बु बृ शु । रविवारो मध्यमः ॥ मृ श्रा पुं ति श्रे मू ह चि स्वा श्र पू३ श्र । शुभतिथिः । हरिबोधे । सूर्येन्दुजीवानां गोचरतः शुद्धौ च ॥ चं श्र ष पूं श्रं च प्र न-तिथयो वर्ज्याः ॥ वधूवरयोरेकत्रशयनम् ६- विशेषेण प्रचारतश्च रविवारे हस्ते च । सामान्यतस्तु श्रा चं भौ वाराः । श्रा पुं ति श्रे म पू उ ह चि स्वा वि श्रं नक्षत्राणि । करपंचकमेव वा । शुभतिथिषु ॥ यात्रा ७-प्रचारतः- श्रं श्र रे मृ मू पुं ति ह ज्ये उत्तमानि । रो ३पू स्वा चि श श्र धं मध्यमानि । अन्यानि वर्ज्यानि । केषांचिन्मते ह मृ श्रं श्र श्र ति रे धं पुं उत्तमानि । ज्ये मू श रो पू३ उ३ मध्यमानि ।

अतोऽन्यान्यनिष्टानि ॥ पूभा नक्षत्र, और गुरुवारमें दक्षिण कीतरफ न जाना । ज्येष्ठा, चं श वार पर पूर्वको, रोहिणी रवि शुक्रवार पर पश्चिमको, उफा बुध भौम वार उत्तरदिशाको न जाना चाहिये ॥ और धनिष्ठापञ्चकभी दक्षिणदिशाकी यात्रामें त्यागना चाहिये ॥ जिस वारमें प्रस्थान करना हो उस वारको पूर्वमें रखकर, कृष्णपक्षमें दक्षिणदिशासे, शुक्लपक्षमें उत्तरदिशासे कोणों के समेत अन्य वारों को रखते जाना । फिर जहां शनिवार आवे उसको काल समझना चाहिए । फिर यात्राकी दिशाकी तरफ अपना मुख करके जब शनि अपने सम्मुख वा वामभागमें रहे, तो काल अनिष्ट समझना चाहिये ॥ योगिनी– प्र, न, पूर्वे । द्वि, द, उत्तरे । तृ, ए, आग्नेये । च, द्वा, नैर्ऋते । पं, त्र, दक्षिणे । ष, चं, पश्चिमे । स, पूं, वायव्ये, । अ, अमा, ईशाने तिष्ठति । योगिनी शुभदा वामे पृष्ठे वाञ्छितदायिनी । दक्षिणे धनहर्त्री च सम्मुखे मरणप्रदा ॥ दिनके पूर्वभागमें उत्तरदिशाको, मध्याह्नमें पूर्वको, अपराह्नमें दक्षिणको, अर्धरात्रमें पश्चिमको, जाना अच्छा है ॥ मेष सिंह धनुर्धर राशिका चन्द्रमा पूर्वमें रहताहै । वृष कन्या मकर राशिका दक्षिणदिशामें, मिथुन तुला कुम्भराशिका पश्चिममें, कर्कट मीन और वृश्चिकराशिका चन्द्रमा उत्तरमें रहता है । यात्रीको सम्मुख और दक्षिणकी तरफ चन्द्रमा रहे, तो अच्छा है । पृष्ठ भागमें हानि तथा वामभागमें अत्यन्त अनिष्ट है ॥ ति. द,

अश्वि, अनू, यह चार नक्षत्र सब तरफ अच्छे हैं, और अन्यदोषोंका निवारण करते हैं। यात्रालग्नमें भौम तथा सूर्य दशम हो, तथा बुध बृहस्पति वा शुक्र केन्द्र अथवा पंचम नवम गृहस्थित हो, बहुत अच्छा होता है ॥ तथा अष्टमगृह खाली होना चाहिये । ब्राह्मणके लिये प्रस्थान चारदिनमें समाप्त होता है ॥ वस्त्रपरिधानं ८-रो, करपंचक, अश्वि, उ ३, पुं ति रे धं इतिनक्षत्राणि । परंतु स्त्रीकेलिये पुं रो, ३उ, ति यह नक्षत्र वर्जनीय हैं । आ शु बु बृ इति वाराः। शुभतिथिः। विवाहादिमें पारितोषिकके वस्त्रोंमें वारादिदोष न विचारने चाहिये ॥ ९, भूषणका बनाना तथा धारण करना-त्रिपुष्कर चर क्षिप्र ध्रुव नक्षत्रोंमें चाहिये ॥ त्रिपुष्कर-पुं उत्तराषाढ कृ उत्तरफा पूर्वभाद्र विशाखा । चर-श्र धं श पुं स्वाति । क्षिप्र-अश्वि ति ह । ध्रुव-रो, ३उ ॥ १० वस्त्रक्षालनम्-नक्षत्र-धं अश्वि करपंचक पुं तिष्य । वर्ज्यानि-च न चं अ अं पूं ष श्राद्धदिन रविवार शनिवार बुधवार ॥ ११, औषधसेवनम्-रे अ पुं ति ह चि स्वा श्र धं श अनू० मूला० मृ० यह नक्षत्र औषधकर्ममें अच्छे हैं ॥ वाराः चं बु जी शु आ । १२ अग्न्याधननक्षत्राणि- वि कृ मृ रे रो ति ज्ये उ३-इति ॥ १३ अग्निकोष्ठविचारः- जिस तिथि पर हवनकरना हो ( शुक्लपक्षमें ) उससंख्याको एक मिलाकर ( कृष्णपक्षमें ) सोलह मिलाकर तथा रविवारसे उस दिनतक वारसंख्या मिलाकर चारसे भाग देनाचाहिये । यदि तीन

वा शून्य शेष रहे तो भूमिपर वह्निवास समझना चाहिए।
फिर उसदिन हवन सुखदायी होजाता है॥ जिस नक्षत्र में
सूर्य हो, उस नक्षत्रसे हवनदिनके नक्षत्रतक सूर्यादिग्रहोंको
तीन २ नक्षत्र बांटने चाहिये। जैसे उनका क्रमन्यास-'सूर्य
बुध शुक्र शनि चन्द्र भौम जीव राहु केतु, है॥ यदि हवन-
दिनके नक्षत्रमें सूर्य शनि भौम राहु केतु पडे तो हवनक-
रना अच्छा नही है ॥ १४ गण्डान्तविचारः- रेवतीनक्षत्रकी
पीछली दोघडी तथा अश्विनीकी पहिली दोघटी। इसीप्र-
कार अश्लेषा तथा मघानक्षत्र, और ज्येष्ठा तथा मूलानक्ष-
त्रकी दो २ घडियां मिलाकर चारघडियां यात्रा जन्म तथा
उद्वाहकालमें अनिष्ट हैं। मूलानक्षत्रके प्रथमपादमें जन्मलेना
पिताके लिये अनिष्ट है, दूसरा पाद माताके लिये अनिष्ट है,
तीसरापाद धनके लिये अनिष्ट है। चौथा पाद तो अच्छा
है। (पाद चतुर्थांश होता है)। अश्लेषानक्षत्रमें विपरीत-
क्रम है॥ प्रथमपाद अच्छा। दूसरेमें धनहानि, तीसरेमें मा-
तृहानि, चौथेमें पितृहानि होती है॥ यहां उक्तदोषोंकी शा-
न्तिके लिये शान्तियाग तथा औषधस्नानादि करने चाहिए॥
दिनमें यदि बालक उत्पन्न हो, तो पिताकेसमेत, रात्रिमें उ-
त्पन्न हो, तो माताके समेत, दोनों सन्ध्याओंमें यदि उत्पन्न
हो, तो मातापिताके समेत बालकको औषधस्नान करना
चाहिये॥ यदि जात की लग्नकुण्डलीमें गुरु वा शुक्र केन्द्र
वा त्रिकोणस्थित हो तो कुच्छ अनिष्ट नहीं॥ केवल सौ-

वर्णविष्णुप्रतिमाके समेत घृतपूर्ण कांस्य पात्र दान करना चाहिये ॥ १५ चूडाकर्म-तृतीये वर्षे कुलदेवीसन्निधौ कार्यम् । पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत् । पंचवर्षाधिकस्येष्टं गर्भिण्यामपि मातरि ॥ नक्षत्राणि- ति रे अश्वि मृ ज्ये ह चि स्वा पुं श्र धं शत० । वर्जनीयवाराः भौ रवि शनिवाराः ॥ च अ ष अं चं न प्र पूं तिथयो वर्ज्याः । विशेषवर्ज्यनक्षत्राणि । कृ मघा अनू रो उत्तराफाल्गुन ॥ जीवार्कचन्द्राणां शुद्धौ । वेधादि च वर्ज्यम् । जन्मराशिमें यदि चन्द्रमा हो तो यात्रा युद्ध गृहारम्भ विवाह तथा क्षुरक्रिया न करने चाहिये ॥ चूडाकर्मके लग्नमें २.१२ ५ ६ अष्टमस्थानमें अशुभग्रह न होने चाहिए ॥ शुभग्रह होनेसे शुभ होता है ॥ १६ चूडा उपनयन विवाहादिमें सूर्य चन्द्रमा और बृहस्पतिकी गोचरशुद्धि देखनी चाहिये । किन्तु विवाहपर वर को सूर्यशुद्धि, कन्याको बृहस्पतिकी, दोनोंको चन्द्रमाकी शुद्धि देखनी चाहिए ॥ जन्मराशिसे ५, ६, ११, २, ७, स्थानमें बृहस्पति हो, तो उत्तम है । १०, ६, ३, १, हो, तो पूजासे अच्छा है । और जगह हो, तो वर्जनीय है ॥ यह भी विचारना- कि यह बृहस्पति यदि उच्चस्थान, अपनीराशि, अपनेमित्रगृह, अपने नवांश, अपने वर्गोत्तम, में हो, तो १२, ८, ४, यह वर्जनीय स्थान भी इसके अच्छे हैं । यदि नीचस्थान वा शत्रुस्थानमें यह हो, तो अच्छे स्थान में भी फलको नहीं देता है ॥ इसी प्रकार सूर्य यदि जन्मराशिसे

३ १० ११ ६ स्थानमें हो, तो अच्छाहै। ९, २, १, ७, ५, इन
स्थानोंमें पूजा चाहिये। अन्यत्र ४ ८ १२ में बुरा है॥ तथा
चन्द्रमा जन्मराशिसे ४, ८, १२ वां त्यागना चाहिये ॥ यदि
गोचरसे यह तीनों अच्छे न रहें, तो अष्टकवर्गकी शुद्धि
पर चूडा व्रत तथा विवाह करना अच्छाहै ॥ जिस राशि-
में ठहराहुआ चन्द्रमा सूर्य तथा बृहस्पति दूषित हो, वह
जन्मकुण्डली की उसी राशिमें रखकर देखना चाहिए। अ-
र्थात् मकरमें जन्मराशिसे किसीका गुरु चौथा रहता है और
दूषित माना जाता है, फिर उसको जन्मकुण्डलीकी मकर-
राशिमें रखना ॥ सूर्यस्य अष्टकवर्गो यथा- भौमात् १ २ ४
७ ८ ९ १० ११ । (यदि भौमसे इन स्थानोंमें सूर्य आवे तो
एक बिन्दु रखना । इसीप्रकार आगे भी अन्यग्रहोंसे देख-
ना । बारबिन्दुओंसे यदि अधिक बिन्दु आवें, तो सूरज
बुराभी शुभदायी होता है) शनेः- १ २ ४ ७ ८ ९ १० ११ ।
सूर्यात् १ २ ४ ७ ८ ९ १० ११ । शुक्रात्-६ ७ १२ । गुरोः ५ ६
९ ११ । चन्द्रात् ३ ६ १० ११ । लग्नात् ३ ६ १० ११ ४ १२ ।
बुधात्-३ ६ १० ११ ९ १२ ५ ॥ बृहस्पतेरष्टकवर्गो यथा- भौ-
मात्-२ ८ ११ १ ४ ७ १० । बृहस्पतेः- १ २ ३ ४ ७ ८ १० ११ ।
सूर्यात् १ २ ३ ४ ७ ८ ९ १० ११ । शनेः ६ ५ १२ ३ । लग्नात् १
२ ४ ५ ६ ७ ९ १० ११ । बुधात् १ २ ४ ५ ६ ९ १० ११ । शुक्रात्
६ २ ११ १० ५ ९ । चन्द्रात्-२ ७ ११ ५ १० ॥ चन्द्रस्याष्टकवर्गः
यथा- लग्नात् ६ ३ १० ११ । भौमात् ६ ३ १० ११ २ ५ ९ । च-

न्द्रात् ६ ३ १० ११ १ ७ । सूर्यात्–६ ३ १० ११ ८ ७ । शनेः ६ ३ ११ ५ । बुधात् ५ ३ ११ ८ ७ १ ४ १० । जीवात् १२ ११ ८ १ ४ ७ १० । शुक्रात् ६ ४ ५ ३ ११ १० ७ ॥ १७ मौञ्जीबन्धः–संक्रान्तिसे मासगणना होती है । श्रावण भाद्रपद तथा पौष मास इसमें त्यागना चाहिये । कृष्णपक्षमें दुर्बलचन्द्रमा, तथा गलग्रह भौमवार तथा शनिवारको त्यागना चाहिये । ष स श्र न चं पूं श्रं प्र, च, यह गलग्रह कहे जाते हैं । मृ रे श्र धं ह चि स्वा ति अश्वि अनू पुं ज्ये यह नक्षत्र हैं । जीवशुक्रास्तादि वेधैकार्गलादि च वर्ज्यम् । व्रतबन्धेऽष्टषड्रिष्फवर्जिताः शोभना ग्रहाः । त्रिषडाये खलाः, पूर्णो गोककर्कस्थो विधुस्तनौ । अर्थः–व्रतबन्धमें ८ ६ १२ स्थान छोडकर शुभग्रह होने चाहिये, ३ ६ ११ में दुष्टग्रह चाहिये, वृष तथा कर्कराशिमें लग्नमें भी चन्द्रमा अच्छा है ॥ कृष्णपक्षकी षष्ठीसे शुक्लपक्षकी पंचमी तक दुर्बलेन्दु होता है ॥ जीव और शुक्रका बाल्य तथा वृद्धत्व और पितृपक्ष जन्ममासादि भी वर्जना चाहिये । यहां पंचमस्थान शुद्धहोना चाहिये । अथवा उसमें शुभग्रह हो ॥ १८ विवाहः संक्रान्तिसे मासगणना होती है । वर्ज्यमास पौष चैत्र आषाढ हैं । तथा भाद्रपदमास भी ॥ पितृपक्ष मलमास त्र्यहः त्रिस्पृक् ( रविभौमशनिवारेषु ) जीव शुक्रयोरस्तकालः, तयोर्वृद्धत्वं बालत्वं च चन्द्रास्तः ग्रहणात्पूर्वं दिनत्रयं च यह सारा त्यागना चाहिये । अमावास्या भौमवार भी छोडदेने चाहिए ॥ वेधैकार्ग-

लग्युतिजामित्रादिदोषाः, जन्मस्थश्चन्द्रः, मासान्ते दिनमेकं तु तिथ्यन्ते घटिकाद्वयम् । घटिकात्रितयं भान्ते, यह सारा वि- वाहमें छोडना चाहिये ॥ आदिगर्भकी कन्या अथवा बाल- कका विवाह ज्यैष्ठमासमें न करना चाहिये । दोमें से यदि एकही आदिगर्भका हो, तो ज्यैष्ठमासभी विरुद्ध नहीं । कई कृत्तिकास्थितसूर्यही यहां त्याज्य मानते हैं । तथा जन्ममास, जन्मनक्षत्र, तथा जन्मदिन विवाहमें वर्जनीय है ॥ जन्मदि- नसे तीस दिन तक जन्ममास होता है । मू अं मृ रो हस्त रे स्वा मघा ३उ यह नक्षत्र हैं । विवाहलग्नमें श सू चं भौ रा, षष्ठस्थानमें शुक्र चन्द्रमा और लग्नस्वामी, अष्टमस्थानमें चं भौ बु जी शु, सारे ग्रह सप्तमस्थानमें, त्याज्य हैं ॥ परंतु चन्द्रमा और बृहस्पति सम हैं ॥ तीसरा शुक्रभी वर्ज्यहै ॥

१९ वाग्दानम्- ह चि स्वा वि अं मृ अश्वि घं इन नक्षत्रोंमें कन्याओंका वाग्दान करना अच्छा है । अथवा विवाहके सारे नक्षत्रोंमें ॥ २० नाडीविचारः—

अ आ पुं उ ह ज्ये मू श पू आदिनाडीमें वियोग होता है। भ मृ ति पू चि अं पू घं उ मध्यनाडी में भर्ता का अनिष्ट, कृ रो श्ले म स्वा वि उ श्र रे अन्त्यनाडी में कुमारी का अ० यह नाडी पुरुष तथा स्त्रीके जन्मनक्षत्रसे देखी जाती है । और अनिष्ट है ॥ यदि स्त्रीपुरुषकी राशि एक हो, परंतु न- क्षत्र भिन्न हो, अथवा नक्षत्र दोनोंका एक ही हो, परंतु राशियां दो हों, अथवा नक्षत्रके एकहोनेपरभी पादभेद हो,

तो एकनाडीका कुच्छ दोष नहीं है ॥ २१ गण ( जाति ) विचारः अश्वि स्वा पुं तिष्य ह मृ श्रं श्र रे–यह जन्मनक्षत्र हों, देवजाति होती है ॥ भ रो श्रा पू३ ३उ यह जन्मनक्षत्र हों, मनुष्यजाति होती है। कृ मघा अश्लेषा चि ज्ये वि मू धं श यह जन्मनक्षत्र हों, राक्षसजाति होती है॥ एक जाति वधू-वरको हो उत्तमप्रीति होती है । देवजाति मनुष्यजाति हो, मध्यमप्रीति होती। देव तथा राक्षसजाति हो वैर होता है। मनुष्य और राक्षसजाति हो तो मृत्यु फल लिखा है॥ यदि अन्यदोष न हों, तो विवाह करना चाहिए, यद्यपि नारी म-नुष्यजातिकी हो, और पुरुष राक्षसजातिवाला हो ॥ यदि षष्ठाष्टकादि न हो, ग्रहमैत्री ( बल ) भी हो, नाडी भी पृथक् २ हो, तो विवाह शुभदायी होता है । यद्यपि नारी राक्षसी हो, और पुरुष मनुष्यजातिका हो ॥ २२ शत्रुषष्ठाष्टक, दोनोंकी राशियोंसे देखनी चाहिये। म सिं, मे कं, तु मी, क कुं, धं वृ, मि वृं, ॥ यह त्यागना चाहिए॥ २३ शत्रुद्विद्वादशी– मि क, वृं तुं. धं मं, ॥ अन्य द्विद्वादशीमें शुभ और मैत्रीभाव लिखा है ॥ २४ नवपंचक भी परस्परराशियोंसे देखनी चाहिये, यह भी दरिद्रता उत्पन्न करती है ॥ २५ ग्रहमेलनम्–दोनों-की जन्मकुण्डलियोंमें, यदि क्रूरग्रह ( सू भौ श रा के ) लग्नमें तथा चतुर्थ सप्तम दशम अष्टम और द्वादशस्थानमें हों तो एक २ ग्रहका एक २ बल समझा जाता है। एवं राशिच-क्रमें भी देखना । गुरुभार्गवसंयोग एक बल है। भौम और

वृहस्पतिका संयोग भी एक बल है। स्त्रीको क्रूरग्रहके साथ चन्द्रमा एक बल है। पुरुषको पापग्रहकेसाथ शुक्र एक बल है॥ और केवल पुरुषके लिये-शुक्रसे यदि चौथे और आठवें गृहमें क्रूरग्रह हो, अथवा शुक्र क्रूरग्रहोंके मध्यमें हो, वा शुभग्रहोंके समेत न हो, वा शुभग्रहोंकी दृष्टिके रहित हो, तो एक बल विचारना। राक्षसजाति भी एक बल है॥

२६ गृहनवास्तु का काम॥ नक्षत्र- ह ज्ये अं श्र स्वा उत्तरापाढा ति पुं मृ अश्वि धं पूफा वि। वाराः चं बु वृ शु॥ २७-नवगृहनिर्माणम्- क मं सिं कुं की संक्रान्तियोंमें पूर्वपश्चिममुखवाले घर बनाने चाहिये। तु मे वृ वृं की संक्रान्तियों पर दक्षिणोत्तरमुखवाले घर बनाने चाहिये। शेष सङ्क्रान्तियां निषिद्ध हैं॥ नक्षत्राणि- पुं ति रो मृ रे धं ३उ ह श्र मघा (श,चि) अनू स्वा। इसमें वेधैकार्गल गुरुशुक्रास्तादि वर्जित करना चाहिये। रिक्ता विष्टि भौमकी वारवेला, वर्ष, मास, वार त्यागना चाहिये। वाराः चं बु बृ शु। शनिवारभी॥ शुभतिथिः प द्वि पं स त्र प्र द त्र पूं॥ कृत्तिकादि सात नक्षत्र पूर्वमें, मघादि सात दक्षिणमें, अनूराधाआदि सात पश्चिममें, धनिष्ठादि सात उत्तरमें रख कर, जिस नक्षत्रपर गृहारम्भ करना हो वह घरके दक्षिण अथवा उत्तरमें अर्थात् घरके दांई बांई तरफ रहे तो चन्द्रमा अच्छा समझना चाहिये। वास्तुचक्रके देखनेकी विधि-सूर्य जिस नक्षत्रमें हो उस से सात नक्षत्र छोडकर आठवेंसे अन्य ग्यारह नक्षत्रों

में से कोई नक्षत्र गृहारम्भका हो, तो शुभकारक है ॥ मे क तुं मं यह चरलग्न हैं । वृ सिं वृं कुं यह स्थिरलग्न हैं । मि कं धं मी यह द्विस्वभावलग्न हैं ॥ गृहारम्भ स्थिर अथवा द्विस्वभावलग्नमें करना चाहिये । लग्नमें शुभग्रह वा उनकी दृष्टि हो। दशमगृहमें शुभग्रह हों । पापग्रह तीसरे छठे और ग्यारवें स्थान पर हों, ५ ६ ७ १ ४ १० स्थानोंमें शुभग्रह हों। परंतु अष्टमस्थान पर कोई क्रूरग्रह न होना चाहिये ॥ २८ नवगृहप्रवेशः वै ज्यै आ आश्विन मगर फगन यह चान्द्रमास नवगृहप्रवेशके लिये हैं। नक्षत्राणि– चि अं मृ रे ति स्वा धं रो ३उ श। वाराः चं वु वृ शु। शुभतिथिः। रिक्ता निन्द्ययोगाश्च वर्ज्याः। चरलग्न, प्रवेशमें वर्जनीयहै । भौमवर्ष वार मास वर्ज्य हैं । गृहप्रवेशमें चौथा गृह शुद्ध होना चाहिये। लग्नके ५ ६ ७ १ ४ १० इन स्थानोंपर शुभग्रह होने चाहियें । क्रूरग्रह अष्टम तथा वारवें स्थान और केन्द्रमें न होने चाहिए। स्थिरलग्नका उदय और वलिष्ठ चन्द्रमा चाहिए ॥ ८ १२ वां गृह शुद्ध होना चाहिए। ६ ३ ११ वें गृहमें क्रूरग्रह हों । वृहस्पति वा शुक्र लग्नमें वा केन्द्रमें हो, तव प्रवेश करना चाहिये। प्रवेशलग्न, गृहकर्ताका जन्मलग्न वा राशिलग्न हो, अथवा इन दो लग्नोंका उपचय (३ ६ १० ११ वां) लग्न हों शुभदायक होता है ॥ सूर्यनक्षत्रसे पांच नक्षत्र छोडकर यदि प्रवेशनक्षत्र ६ ७ ८ ९ १० ११ १२ १३ वां हो, अथवा २२, २३, २४, २५, २६, २७, वां हो, तो कलशचक्र भी प्रवेशमें शुभदायक होता है ॥



इति निवेदयति कल्लेत्युपाह्वो नाथरामशास्त्री

